हा दैव ! निर्घृणो भूत्वा कथमेवमचिन्तितम् । ददासि दारुणं दुःखं फलं वैतत्स्वकर्मणः ॥ १२७ ॥
आर्यपुत्र ! तवापीयमसमीक्षितकारिता । नोचिता यन्महान्तोऽत्र युक्तायुक्तविचारिणः ॥ १२८ ॥
जानन्त्या विप्रियं किञ्चित् प्रिय! नाचरित मया। अजानन्त्या कृतं यत्तु तत्र दण्डः क ईदृशः ? ॥ १२९ ॥
कर्णेजपेन केनापि शिष्टं जाने न तत्प्रिय । मा मंस्थाः शीलमालिन्यं पुनः स्वप्नेऽपि यत्कृतम् ॥ १३० ॥
तत्प्रेम प्रतिपत्तिः सा तदालपनमञ्जसा । सर्वमेकपदे देव ! त्वया निस्तारितं रयात् ॥ १३१ ॥
इति बहुधा विलपन्त्याः सहसा जठरं समाकुलीभूतम्। ज्ञात्वा प्रसवावसरं त्रपयागादापगातीरम् ॥ १३२ ॥
तत्रान्तर्वनगुल्मं प्रासूत सुतं सुतप्तहेमाभम् । तं वीक्ष्य विशालाक्षं मुमुदेऽमन्दं मृगाक्षी सा ॥ १३३ ॥
यत —आपद्गतमपि सुखयति हसयति गुरुशोकनिभृतहृदयमपि । मृतमपि जीवयतितरामपत्यसञ्जीवनी जीवम् ॥ १३४ ॥
अत्रान्तरे स दारक इतस्ततः सञ्चरन् नदीतीरे । विलुलोठ सापि पद्भ्यामधात् कथं कथमपि प्रेम्णा ॥ १३५ ॥
भणति सकरुणं निर्घृण! हा दैव! कृतेन किमियतापि त्वम् । तुष्टोऽसि न यद्दत्त्वा सुतमपहरसि स्वयं मेऽद्य ॥ १३६ ॥
तद् व्याघ्र्योऽपि वरं ताः शुन्योऽप्यथवा वरं रदाग्रेषु। या धृत्वा स्वापत्यं प्रयान्ति निजमीप्सितं स्थानम् ॥ १३७ ॥
परमेश्वरि! नदि! मातस्तुभ्यं प्रणतास्मि सविनयमिदानीम्। मा मत्पुत्रमपहियास्त्वमसि यतो जीवजीवातुः ॥ १३८ ॥
यदि जयति जगति शीलं यदि तच्च मया कलङ्कितं न मनाक्।तद्देवि! बोधनयने! कुरु बालकपालनोपायम् ॥ १३९ ॥

॥ अर्हम् ॥

शास्त्रविशारद-जैनाचार्य-श्रीविजयधर्मसूरिभ्यो नमः ।

पण्डितसत्यराजगणिविरचितं

# पृथ्वीचन्द्रचरितम् ।

## प्रथमो भवः ।

श्रीनाभेयोऽसमश्रेयोऽतनुतां तनुतां स वः । यत्पादपद्मे पद्मेयं सङ्गता जगतामपि ॥ १ ॥

श्रीशान्तिः शान्तिकृद् वः स्तादस्ताखिलतमोभरः । यद्यशःस्पर्द्धयेवासीच्छशी मन्येऽङ्कपङ्कभृत् ॥ २ ॥

स्वबाहुदण्डदोलायां योऽचिखेलज्जनार्दनम् । जगच्चित्रकरस्फूर्त्तिः स श्रीनेमिः श्रियेऽस्तु वः ॥ ३ ॥

यन्मूर्ध्न्यभात् प्रभादीप्रः फणामणिचयोऽनिशम् । हन्तुमन्तस्तमांसीव श्रीपार्श्वो वो मुदेऽस्तु सः ॥ ४ ॥

जयसेनकुमाराह्वाङ्किता वीक्ष्याङ्गदौ नृपः । दध्यौ हा ! निर्मितं पापमविमृश्येदमञ्जसा ॥ १५३ ॥
भूयोऽनुशयवान् दत्तमपृच्छत् तत्प्रतीतये । देवशालाद् यथा कश्चिदागच्छत् सोऽप्यदोऽवदत् ॥ १५४ ॥
तिष्ठन्ति मद्गृहे देव्याकारणार्थमिहागताः । नृपाप्तभृत्या राज्ञेति पृष्टा आहूय ते तदा ॥ १५५ ॥
भोः ! भोः ! प्रजिघ्ये केनेदमङ्गदद्वयमुच्यताम् । जयसेनकुमारेणेत्यवोचस्तेऽपि संमदात् ॥ १५६ ॥
देव्याः पार्श्वे मुक्तमस्तीत्येतच्छ्रुत्वाथ तद्वचः । मूर्च्छावशेन झटिति पतितो भुवि भूपतिः ॥ १५७ ॥
कथञ्चिल्लब्धचैतन्योऽचिन्तयच्चेति चेतसि । अहो ! अकृत्यकारित्वमहो ! निर्दयता मम ॥ १५८ ॥
कर्मचाण्डालताहो ! मे चिन्तयन्मूर्च्छितः पुनः । पृष्टो मन्त्र्यादिभिर्भूपोऽप्याख्यदश्रुविमिश्रदृक् ॥ १५९ ॥
भोः ! भोः ! मुष्टोऽस्मि दुष्टोऽहमदृष्टव्यमुखोऽस्मि च । अपवित्रचरित्रो यदविचार्य कुलत्रपाम् ॥ १६० ॥
ईषदप्यविसंभाव्यदोषाप्येषा कलावती । हा हा ! नीता कृतान्तस्य सदनं पापिनाधुना ॥ १६१ ॥
तद्दर्शये किमात्मीयं वदनं भारितोऽहसा ? । स्त्रीघातपातकादस्मात् स्थानं श्वभ्रेऽपि नास्ति मे ॥ १६२ ॥
सज्जीकुर्वन्तु तत्काष्ठान्यधुनाग्निप्रवेशतः । येन स्वं गुरुशोकाग्नितप्तं निर्वापये रयात् ॥ १६३ ॥
तद्वज्रपातप्रतिमं श्रुत्वा मन्त्र्यादयो वचः । ऊचुः स्वामिन् ! मा स्म कार्षीः क्षारक्षेपं क्षतोपरि ॥ १६४ ॥
विवेकिन्नेकमग्रेऽपि यदासीदसमञ्जसम् । द्वितीयं त्वयि कुर्वाणे नाथहीनाऽद्य ही ! मही ॥ १६५ ॥

यदङ्कसङ्गतो भाति पारीन्द्रोऽतन्द्रविक्रमः । कर्मभभेदे भव्यानामिव वीरः स वः श्रिये ॥ ५ ॥
गौतमो वस्तमो हन्तु चेतोविवरसंभवम् । यमालिलिङ्गुर्युगपत् सौभाग्याल्लब्धयोऽङ्गनाः ॥ ६ ॥
यद्वाग्गृहमणेर्जाड्यध्वान्तं भिन्नं क्षणान्नृणाम् । तेभ्यः सद्गुणवार्धिभ्यः श्रीगुरुभ्यो नमो नमः ॥ ७ ॥
स्मृत्वा वाग्देवतां चित्ते नत्वा सद्भावतोऽर्हतः । पृथ्वीचन्द्रमहीन्द्रस्य चरित्रं कीर्त्तयाम्यहम् ॥ ८ ॥

तथाहि—

जम्बूद्वीपेऽत्र भरते देशे सुमङ्गलाभिधे । पुरं शङ्खपुरं तत्र राजते शङ्खभूपतिः ॥ ९ ॥
पितेव स प्रजाः शासदन्यदाऽऽस्थानमास्थितः । गजश्रेष्ठिसुतो दत्तः सोपदस्तमथानमत् ॥ १० ॥
स्वागतादिप्रश्नपूर्वं भूकान्तस्तमवीवदत् । किं चिराद् दृश्यसे भोस्त्वं दत्तः प्राह शृणु प्रभो ! ॥ ११ ॥
वणिजां देशयात्रादेरपि युक्तं धनार्जनम् । विभवार्जनलोभेन तद्भूरि भुवमभ्रमम् ॥ १२ ॥

तथा च—

यः स्वगेहाद्विमोक्षेत्तु नाक्रमेद् भूयसीं भुवम् । स कूपभेकवत् सारासारं वेत्ति न किञ्चन ॥ १३ ॥

लक्ष्यते भाग्यमात्मनः । ज्ञायते सदसद्भेदो भ्रम्यते तेन भूतले ॥ १४ ॥

विकसत्कुसुमामोदमञ्जुगुञ्जन्मधुव्रतम् । माद्यत्पिकवधूस्फीतगीतसन्ततिपेशलम् ॥ ११ ॥
वनं वीक्ष्य वसन्तर्त्तुविशेषविपुलोदयम् । इतस्ततो वयस्येषु केलिलीलाचलेष्वथ ॥ १२ ॥
प्रदेशे क्वापि शुश्रावारावं कस्याप्यसाविह । अहो! अनायकं विश्वमिति भूमिपतेः सुतः ॥ १३ ॥ (त्रिभिर्विशेषकम्).
दध्यौ कमलसेनोऽथ नयेनोर्वी प्रशासति । अहो! मत्पितरि क्ष्मापे कथं विश्वमनायकम् ? ॥ १४ ॥
करवालं करे कृत्वा करालः सोऽतिमन्युना । अभीतोऽप्यभितोऽपश्यन्न च कश्चिदलोकत ॥ १५ ॥
श्रावं श्रावं तमारावं दर्शं दर्शं दिशो दश । ददर्श दूरे देवौको विशन्तीं कामपि स्त्रियम् ॥ १६ ॥
ध्रुवमस्या अयं शब्दः पृच्छामि तदमूमहम् । ध्यात्वेत्यगाद् देवगृहं तावदुत्पतितं हि तत् ॥ १७ ॥
नभोऽङ्गणे प्रचलितं वायुवेगेन तत्क्षणात् । गत्वा दूरं समुत्तीर्य काप्यस्थाद् भुवि तत्स्थिरम् ॥ १८ ॥
कुमारो विस्मितोऽपश्यत् तां पूर्वेक्षितनर्त्तिनीम्। अत्रान्तरे विनिर्यान्तीं कुतोऽपि भवनान्तरात् ॥ १९ ॥
स्वागतं वत्स ! ते सेति ब्रुवाणाऽदात् तदासनम् । कुमारायासकौ तत्र न्यषीदच्च सकौतुकः ॥ २० ॥
भूयो भूभर्त्तृभूस्तां चाभणद् भद्रेऽसि का त्वकम्?। किश्चेन्द्रजालमेतद् वा कथं विश्वमनायकम्? ॥ २१ ॥
सोचे यस्या न को नाथस्तस्या जगदनायकम् । इन्द्रजालं पुनर्नाथहेतोरेव व्यधामदः ॥ २२ ॥
अन्यच्च—अङ्गश्रीरिति नाम्नाऽहं प्रौढा स्त्री बहुपूरुषैः । भुक्ता संप्रत्यनाथाया नाथो भवति चेद् भवान् ॥ २३ ॥

नृदेव ! देवशालाख्यं वाणिज्याय गतः पुरम्। नृपोऽजल्पत् किमाश्चर्यं तत्र दृष्टं श्रुतं वद ? ॥ १५ ॥
दत्तोऽवदद् देवशालं विविधाश्चर्यसङ्कुलम् । विमानानीव गेहानि यत्र पौराः स्मरा इव ॥ १६ ॥
दृष्टं यदपरं चित्रं यत्र तद्वक्तुमक्षमः । विलोकयतु तद्देवः स्वयमेवेति संलपन् ॥ १७ ॥
मुमोच चित्रफलकं सोऽपि तद्वीक्ष्य विस्मितः । प्राह चित्रस्थिता केयं सुरी हरति मे मनः ॥ १८ ॥
अथ स्यान्नेदृशं रूपं किन्तु विज्ञानकौशलम् । कस्यापि शिल्पिनो ह्येतद् दत्तः स्माहावधार्यताम् ॥ १९ ॥
देव ! दृष्टमपूर्णं च लिखतः कौशलं नु किम् । अदृष्टप्रतिरूपस्य निर्माणे कौशलं विधेः ॥ २० ॥
राजाख्यत् किमपूर्णं यद्देवी सर्वाङ्गसुन्दरी । कापि चित्रस्थिताप्युच्चैर्धिनोति मम मानसम् ॥ २१ ॥
स्मित्वा सोऽप्याह देवीत्वं प्रापि मानुष्यपि त्वया। यद्वा देवस्य देव्यः स्युर्मानुष्योऽपि न संशयः ॥ २२ ॥
किमीदृग्रूपशालिन्यो मानुष्यः संभवन्त्यहो !। दत्तोऽवग् लेखितुं शक्याः किमस्या विभ्रमादयः ॥ २३ ॥
लिखितं शिल्पिना रूपं दृग्विनोदाय केवलम् । तां वीक्ष्य पश्यंश्चित्रस्थं मन्यते कूटलेखकम् ॥ २४ ॥
नृपोऽवग् भद्र ! कस्यैषा सुता दत्तोऽवदद् विभो !। स्वसा ममेयं तद्भोः ! किं देवशाले त्वयेक्षिता ॥ २५ ॥
दत्तोऽवक् परमार्थं वः कथयामि यदेकदा । पितुरादेशतो देशदिदृक्षायै सुसार्थयुक् ॥ २६ ॥
देवशालदेशसन्धौ बहुपत्तिसमन्वितः । वेगवत्तुरगारूढो दर्शयन्मार्गमग्रतः ॥ २७ ॥

तद्वीक्ष्याख्यत् क्षमाधीशः किमिदं विस्रचेष्टितम् ? । सा प्राह स्माहमेतस्माद्धीनास्मि प्रतिबिम्बतः ॥ १९२ ॥
यद्वह्न्यद्भिः शोध्यते ह्येतन्न पुनर्मामकं वपुः । अशुचिभ्यः समुद्भूतमशुचीनां तथाऽऽस्पदम् ॥ १९३ ॥
निशम्येति गिरं तस्या निर्विरोधां धराधवः । प्राह मोहान्धतमसा ग्रस्तः साध्वस्मि बोधितः ॥ १९४ ॥
तत् समस्तं क्षमस्वागः कुर्वे किं ते प्रियं स्वसः ! । त्वद्गिरा परदारेभ्यो निवृत्तोऽद्यप्रभृत्यहम् ॥ १९५ ॥
इत्युक्त्वा वस्त्रभूषाद्यैर्भूपस्तां व्यसृजत् ततः । यावज्जीवं च सा तीव्रतरं शीलमपालयत् ॥ १९६ ॥

इति बुद्धिसुन्दरीचरितं समाप्तम् ।

पुर्यस्ति ताम्रलिप्तीति तत्र श्रीदसमः श्रिया । महेभ्यो धर्मनामा सोऽन्यदा साकेतमागतः ॥ १९७ ॥
विपणिस्थोऽन्यदा धर्मो व्रजन्तीमापणेषु ताम् । तत्क्षणाद् वीक्ष्य रक्तोऽभून्मृगाक्षीमृद्धिसुन्दरीम् ॥ १९८ ॥
तरुणीं परिणीयायमादाय स्वपुरं गतः । अन्वभूतां च तौ शुद्धमती शर्माणि दम्पती ॥ १९९ ॥
अन्यदा पोतमारुह्य सपण्यः सप्रियोऽपि च । स श्रेष्ठी सिंहलद्वीपं संप्राप्य स्वमुपार्जयत् ॥ २०० ॥
प्रतिभाण्डमुपादाय निवृत्तः स्वपुरं प्रति । दैवयोगात् कुवातेन यानं भग्नं पयोनिधौ ॥ २०१ ॥
दम्पती फलकं लब्ध्वा तीर्त्वाऽब्धिं पञ्चभिर्दिनैः । भवितव्यतयैकत्र द्वीपे क्वापि ससञ्जतुः ॥ २०२ ॥
वनजैस्तैः फलैस्तत्र प्राणाधारं वितेनतुः । सांयात्रिकज्ञापनाय ध्वजामूर्ध्वां च चक्रतुः ॥ २०३ ॥

पुरःस्थः सार्थलोकानां यामि यावन्महावने । तावत् किञ्चित् समासन्नं मृताश्वं पतितं भुवि ॥ २८ ॥
सर्वाङ्गभद्रमद्राक्षमेकं विगतचेतनम् । नरं मूर्च्छासमुच्छ्रायनिमीलितविलोचनम् ॥ २९ ॥
( चतुर्भिः कलापकम् )

तं च मूर्च्छापनोदायासिञ्चं शिशिरवारिणा । क्रमादवाप्तचैतन्यं भव्यभोज्यान्यभोजयम् ॥ ३० ॥
अथ स्वस्थतनुं तं चापृच्छं मधुरया गिरा । कुमार ! सुन्दराकार ! कुतः स्थानात् त्वमागमः ? ॥ ३१ ॥
संप्राप्तः कथमेकाकी गहनेऽस्मिन् दशामिमाम् । सोऽप्याख्यन्न भविष्यस्य काचिदस्ति प्रतिक्रिया ॥ ३२ ॥
यदहं देवनन्द्याह्वदेशादश्वापहारतः । अत्रायातस्त्वया प्राणदानेनोपकृतोऽस्मि च ॥ ३३ ॥
त्वमपि ब्रूहि भो भद्र ! कुत आगाः क यास्यसि ? । दत्तोऽप्याख्यदहं शङ्खपुरादत्र समागमम् ॥ ३४ ॥
त्वद्देशभूषणं देवशालं गन्तास्मि चाधुना । सार्थोऽभूदावयोरेकस्तदारोह हयं जवात् ॥ ३५ ॥
उत्तीर्य यदिमां भीमामटवीं याव ईप्सितम् । स्थानमित्युक्तिनिष्णातौ चलितौ तौ ततः शनैः ॥ ३६ ॥
अतिक्रमावः कान्तारं यावत् सार्थेन संयुतौ । तावत् पुरो महत्सैन्यमपश्याव समागतम् ॥ ३७ ॥
क्षुब्धाः सार्थभटाः सर्वे सन्नद्धा योद्धुमागमन् । तावन्मा भैष्टेति वादी सादी कोऽपि पुरोऽभवत् ॥ ३८ ॥
जयसेनकुमारं सोऽप्युपलक्ष्याभजन्मुदम् । विज्ञाततत्स्वरूपोऽथ तत्रागाद् विजयो नृपः ॥ ३९ ॥

कन्याप्राग्भवभर्त्ता स भविताऽस्यापि नीवृतः । पतिः स्फुटमिति प्रोच्य तिरोधत्त स गुह्यकः ॥ २९३ ॥
कन्यानृपेण युक्तोऽहं ततः प्राप्तोऽद्य नन्दनम् । शेषं तत्रैव प्रत्यक्षमशेषमपि चाभवत् ॥ २९४ ॥
अस्यास्तीव्रानुरागोऽभूद् दृष्टमात्रेऽपि च त्वयि । गृहीता सा क्षणादेव विकारैः स्मरसंभवैः ॥ २९५ ॥
तथा च—विलोललोचनयुगा मन्दाक्षावनतानना । पुलकाङ्कितदेहाऽसौ प्रस्खलद्वर्णभाषिणी ॥ २९६ ॥
त्वया विचक्षणेनापि मृगाक्षी किं न लक्षिता ? । परेङ्गितज्ञानफला धियः स्युर्धीमतां यतः ॥ २९७ ॥ (युग्मम्).
वचनं सचिवस्येति श्रुत्वा दाक्षिण्यवारिधिः । तदैश्वर्यं च तां कन्यां कुमारः प्रत्यपद्यत ॥ २९८ ॥
अग्रहीद् गुणसेनायाः पाणिं सोऽपि महामहात् । सचिवैः शुचिधीभिश्च चम्पाराज्ये निवेशितः ॥२९९॥
कलावतीति या पूर्वं पत्नी शङ्खभवेऽभवत् । साऽत्रासीद् गुणसेनेति तेन प्रेम द्वयोर्मिथः ॥ ३०० ॥
इतः समरसिंहाख्यो वच्छदेशाधिपो नृपः । भूपं कमलसेनं तं दूतेनेति समादिशत् ॥ ३०१ ॥
भोः ! स्वयंभूर्नृपैश्वर्यं भुवो वंशक्रमागतम् । अपि कृच्छ्रेण भुज्येत शौर्यायत्ता हि यच्छ्रियः ॥ ३०२ ॥
त्वं पुनः पथिकोऽप्यन्यराज्यमासाद्य माद्यसि । ममाज्ञां जगतो मान्यामपि नैव च मन्यसे ॥ ३०३ ॥
विहाय तदिदं राज्यं पलायस्वान्यथा पुनः । अहमागत एवास्मि भवेस्त्वं समरोद्यतः ॥ ३०४ ॥
इति दूतोक्तमाकर्ण्यावदद् भूपोऽपि तं प्रति । द्रुतं भो दूत ! गत्वा त्वं ब्रूयाः स्वस्वामिनः पुरः ॥ ३०५ ॥

कुमारेण नतो भूपोऽपृच्छद् व्यतिकरं च तम् । गाढमालिङ्गय सोऽप्याख्यत् स्वं वृत्तान्तं यथास्थितम् ॥ ४० ॥
तात ! निष्कारणो बन्धुरसौ बन्धुरसौहृदः । प्राणदोऽभून्ममेत्युक्त्वाऽदर्शयन्मां नृपस्य सः ॥ ४१ ॥
भूपोऽपि मामभिष्वज्य विजयी विजयाभिधः । ज्येष्ठाङ्गजमिति प्रीत्या प्रत्यपद्यत सत्वरम् ॥ ४२ ॥
देवशालपुरं प्राप्तः स्थितस्तत्र तथा सुखम् । यथा मे मातृपित्रादि सर्वं विस्मृतिमागमत् ॥ ४३ ॥
अथ तस्य नृपस्यासीत् श्रीदेवीकुक्षिसंभवा । जयसेनकुमारस्यानुजा कन्या कलावती ॥ ४४ ॥
प्राप्तविद्यानवद्याङ्गी तारुण्यं सा क्रमादगात् । अनुरूपं वरं तस्याः क्वाप्यपश्यन्न तत्पिता ॥ ४५ ॥
नृपो मामादिशद् वत्स ! निजजाम्युचितं वरम् । संपाद्य चिन्तापाथोधेर्मामुत्तारय सत्वरम् ॥ ४६ ॥
तथेति प्रतिपद्याहं तत्प्रतिच्छन्दमञ्जसा । लिखित्वा फलकेऽमुष्मिन्नागामेषोऽथ तत्कृते ॥ ४७ ॥
स्वामिंस्त्वदुचितामेतामेव संभावयाम्यहम् । प्रमाणं देव एवातः परं बहु किमुच्यते ? ॥ ४८ ॥
तदेवान्ववदन्मन्त्र्यादयोऽपि प्रमदात् तदा । अत्रान्तरे समयज्ञोऽवदत् कालनिवेदकः ॥ ४९ ॥
देवतावसरस्यास्ति नृदेवावसरोऽधुना । नृपो विसृज्य पार्षद्यान् देवार्चादि व्यधान्मुदा ॥ ५० ॥
भुक्त्वा सुप्तोऽथ पर्यङ्के दध्याविति धराधवः । स्वस्त्यस्मै विधये येन विदधेऽसौ कलावती ॥ ५१ ॥
यन्नरास्तेन गगनगमनक्षमविक्रमाः । पक्षिवत्पक्षयुक्ता वा न कृतास्तदसाध्वभूत् ॥ ५२ ॥

तद् वक्तुं शक्यते नैकजिह्वयाऽस्माभिरञ्जसा । साम्प्रतं तु मनाक् चित्तं निर्वृतं त्वत्प्रवृत्तितः ॥ ३१९ ॥
ततस्त्वं विरहोदग्रदवदग्धतनू निजौ । स्वसङ्गमसुधासारैः सिञ्चस्व पितरौ जवात् ॥ ३२० ॥
श्रुत्वेति वचनं साररचनं सचिवोदितम् । अकुण्ठोत्कण्ठया युक्तः सारसैन्यसमन्वितः ॥ ३२१ ॥
भूपः कृतप्रयाणोऽयमविलम्बं पथि व्रजन् । क्रमेण पोतनं प्राप प्रमोदापूर्णमानसः ॥ ३२२ ॥ (युग्मम्).
ज्ञात्वा तमागतं शत्रुञ्जयः संमुखमागमत् । पदातीभूय सोऽप्याशु पितुः पादाब्जमानमत् ॥ ३२३ ॥
निजाङ्गजाङ्गसंपर्कसुधारसनिषेकतः । मनो विरहसंतप्तं पितापि निरवापयत् ॥ ३२४ ॥
तच्चरित्रं प्रभुत्वं तद् भुवः स्वाङ्गभुवः पिता । श्रुत्वा दृष्ट्वा पुत्रवतां धुर्यात्मानममन्यत ॥ ३२५ ॥
राज्योचितमिति ज्ञात्वा पिताऽमन्दप्रमोदतः । निवेश्य स्वपदेऽमेयमहोत्सवमवर्त्तयत् ॥ ३२६ ॥
स्वयं तु विषयाभोगविरतो नृपपुङ्गवः । शीलन्धरगुरूपान्ते सङ्गत्यागं व्यधाद् बुधः ॥ ३२७ ॥
स राजर्षिः क्रमात् कर्मकक्षमुन्मूल्य मूलतः । केवलश्रियमासाद्य सद्यः संप्राप निर्वृतिम् ॥ ३२८ ॥
नृपः कमलसेनोऽपि शुक्लपक्षशशीव सः । वर्द्धमानः क्रमादेकच्छत्रतामसृजद् भुवः ॥ ३२९ ॥
स योधः क्रशिताशेषविरोधः क्रोधरोधकृत् । न्यग्रोध इव शाखाभिः सूनुभिः प्रासरद् भुवि ॥ ३३० ॥
अन्यदा प्रावृषि प्राप्तरतिः सरिति राड् भुवः । रिरंसायै गतो दूरं तत्पूरः प्रासरद् भुवि ॥ ३३१ ॥

मन्येऽहो ! मानवेभ्यो यद्वरं ते विहगा अपि । ये यान्ति सत्वरं तत्र यत्रात्मीयः प्रियो जनः ॥ ५३ ॥
अहो ! तत्किमहो भाति महोदयमहोमयम् । यत्रैतत्प्रेयसीपाणिमादास्ये पाणिना स्वयम् ॥ ५४ ॥
इति हृल्लेखमुल्लेखविशेषविहितारतिः । नृपतिः पुनरास्थानमभजत् प्रातरञ्जसा ॥ ५५ ॥
समन्तात्सर्वसामन्ताः समेतास्तमुपास्तये । सभा सा भाति गीर्वाणपतिपर्षन्निभा स्फुटम् ॥ ५६ ॥
अत्रान्तरे गुरुश्वासरुद्धकण्ठेन केनचित् । चरेणागत्य विज्ञप्तो निःशङ्कः शङ्खभूपतिः ॥ ५७ ॥
किमप्यागान्महासैन्यं देव ! त्वद्देशसीमनि । दिशो दशापि पूर्यन्ते तज्जतूर्यरवेण यत् ॥ ५८ ॥
जलाशया सञ्चरद्भिर्भटैः सर्वे जलाशयाः । खला इव भवन्ति स्म तत्क्षणात्कलुषाशयाः ॥ ५९ ॥
श्रुत्वेति भूपः सपदि विस्मृतान्यप्रयोजनः । भ्रुकुटीभङ्गभीमाङ्गो भटानाहोत्कटो रुषा ॥ ६० ॥
भोः ! वादयन्तु यानाय ढक्कां निष्कास्य कोशतः। समग्रापि च सङ्ग्रामसामग्री क्रियतां द्रुतम् ॥ ६१ ॥
तथा कृते तैर्भूकान्तोऽभिषिषेणयिषुर्यदा । तावदागत्य दत्तोऽसौ सस्मितस्तं व्यजिज्ञपत् ॥ ६२ ॥
अव्येतन्नेतरारब्धं किमकाण्डेऽपि विड्वरम् । निजाग्रजजयसेनकुमारेण यदन्विता ॥ ६३ ॥
वृणीतुं त्वां समायाति सकला सा कलावती । यया चित्रस्थयाप्युच्चैररञ्जि तव मानसम् ॥ ६४ ॥ ( युग्मम् ).

## तृतीयो भवः ।

अथात्र शूरसेनाह्वदेशेऽस्ति मथुरापुरी । तत्र मेघनृपो नीत्या क्ष्मां भुनक्ति त्रिशक्तियुक् ॥ १ ॥
अर्धाङ्गसङ्गिनी तस्य विमला सुगुणान्विता । मुक्तावलीव सुभगा देवी मुक्तावलीत्यभूत् ॥ २ ॥
तया दयितया युक्तस्तडितेव लसद्रुचा । मेघो मेघ इवाशेषं तापं प्राशमयद् विशाम् ॥ ३ ॥
अन्यदा वासभवनं प्रविशन् मेघभूपतिः । दृष्ट्वा शशिमुखीं साश्रुमुखीं पप्रच्छ कारणम् ॥ ४ ॥
सा प्राह किं तया नाथ ! रूपसौभाग्यसंपदा । यदङ्कसङ्गतो रङ्गादङ्गभूर्नाङ्ग ! खेलति ॥ ५ ॥
श्रुत्वेति भूविभुः स्माह दैवायत्तमिदं प्रिये ! । नहि केनापि दुर्लङ्घ्या लङ्घ्यते भवितव्यता ॥ ६ ॥
राज्ञी प्राह तथाप्यत्र कोऽप्युपायो विधीयते । भाग्ययोगेऽपि यत् साध्यं फलमुद्योगयोगतः ॥ ७ ॥
मणिमन्त्रौषधीनां यदचिन्त्यो महिमाऽस्ति हि । देवताराधनाद् यद्वा प्राप्यते चिन्तितं फलम् ॥ ८ ॥
निशम्य सम्यक् तद् देव्या गदितं भूपुरन्दरः । प्राह प्रिये ! शुचं मुञ्च करिष्ये त्वत्समीहितम् ॥ ९ ॥
इति देवीं समाश्वास्यान्यदा साहससेवधिः । नृपः कृष्णचतुर्दश्यां निशि प्रेतवनं ययौ ॥ १० ॥

इति तद्वचसा सहसा पीयूषरसाभिषिक्त इव भूभुक् ।
विध्यातचित्तदाहस्तं दत्तं स्माह सोत्साहः ॥ ६५ ॥
एतदघटिष्ट दुर्घटमपि झटिति किमित्यजल्पदेषोऽपि ।
देवस्याद्भुतपुण्यप्राग्भारेणात्र किं न भवेत् ॥ ६६ ॥

अत्रान्तर मतिसारसचिवोऽवग् धराधवम् । स्वामिभक्तः कृतज्ञोऽयमचिन्त्यगुणवैभवः ॥ ६७ ॥
गाम्भीर्यान्न समाख्याति स्फुटं संभावये परम् । निजस्वामिगुणोत्कर्षो वर्णितस्तेन तत्र हि ॥ ६८ ॥
कलावती ततश्चैषा त्वय्यदृष्टेऽप्यभूद्रता । ततो हि महिता पित्रा त्वां वृणीतुं कृतादरा ॥ ६९ ॥
समं तयैव चलितो दत्तः संभाव्यते परम् । देवस्य ज्ञापनायैव पुरो भूत्वायमागमत् ॥ ७० ॥
दत्तोऽप्याख्यदहो ! बुद्धिर्मतिसारस्य मन्त्रिणः । वस्तु येनाश्रुतादृष्टमपि साक्षात्कृतं द्रुतम् ॥ ७१ ॥
इति सर्वेऽपि सन्तुष्टाः समादिष्टाः क्षमाभुजा । कुर्वन्तु भोः ! यदधुना कृत्यं तत् प्रथितोद्यमाः ॥ ७२ ॥
आगादत्रान्तरे सारपरिवारसमन्वितः । जयसेनकुमारोऽप्यावासितः सन्निकेतने ॥ ७३ ॥
तत्र नद्दिनशेषां तामतिवाह्य विभावरीम् । प्रातर्नृपसभामागात् कुमारो मारसन्निभः ॥ ७४ ॥
भूपभूर्भूधवं वीक्ष्य प्राणमत् प्राभृतान्वितः । क्षमापतिः समालिङ्ग्य कुमारं स्वागतं जगौ ॥ ७५ ॥

सवयोभिर्वयस्याभिर्बहुधा बोधिताऽप्यसौ । अपि कामसमानानां सेहे नामाऽपि नो नृणाम् ॥ २४ ॥
तद् ज्ञात्वा नृपतिश्चिन्तातुरः पप्रच्छ मन्त्रिणम्। विभाव्य सोऽपि चित्ते स्वे धियाऽवोचद् नृपं प्रति ॥२५॥
प्राग्भवे नूनमेतस्याः कस्मिन्नपि नरेऽभवत् । प्रेमाधिक्यं ततस्त्यक्त्वा तं नान्यत्र मनोरतिः ॥ २६ ॥
ततस्तदवबोधाय सर्वभूभृत्तनूभुवाम् । प्रतिरूपाणि दर्श्यन्ते प्राग्भर्त्तास्यास्तदाप्यते ॥ २७ ॥
यतः—श्रुतं प्रियस्य नामापि प्रतिरूपमपीक्षितम् । ध्रुवं जन्मान्तरप्रेम प्रकाशयति देहिनाम् ॥ २८ ॥
युक्तमेतदतः सर्वराज्येषु प्राहिणोद् नृपः। आत्तकन्याप्रतिरूपान् सर्वांश्चित्रकरान् नरान् ॥ २९ ॥
तेऽपि भूपतनूजानामनेकान्यद्भुतान्यपि । रूपाणि नृपकन्यायै लिखित्वाऽदुर्नृपाज्ञया ॥ ३० ॥
किमेतद्दर्शनेनान्यकार्यविघ्नविधायिना । भणन्तीत्यत्यजत् साऽपि सासूयं तानि तत्क्षणात् ॥३१॥
अत्रान्तरे मथुराया आगताश्चित्रकृन्नराः । देवसिंहकुमारस्यादर्शयन् रूपमद्भुतम् ॥ ३२ ॥
भूपस्तद्रूपमालोक्यावदद् रूपेण चामुना। चेन्मनो रज्यते नास्यास्तन्नीरागशिरोमणिः ॥ ३३ ॥
कन्येयमविशेषज्ञा यद्वा पशुरिवोदिता । ब्रुवन्निति नृपः प्रैषीत् पुत्र्यै तां चित्रपट्टिकाम् ॥ ३४ ॥
साऽपि पूर्वं नृपादेशात् ततश्चापूर्वदर्शनात्। ततो हर्षात् स्मररसात् तद्रूपं वीक्ष्य विस्मिता ॥ ३५ ॥
धूनयन्ती शिरो राजसुताऽऽलीनां पुरोऽवदत् । केनेदृग् लिखितं रूपमहो ! विज्ञानकौशलम् ॥ ३६ ॥

देवास्मत्स्वामिनोऽग्रेऽवक् दत्तोऽयं त्वद्गुणांस्तथा ॥ ७६ ॥
अत्रान्तरे वरांगाह्वः कुमारसचिवोऽवदत् । यथा त्वां विना न मनः क्वचित् ॥ ७७ ॥ ( युग्मम् ).
यथा त्वद्गुणरक्तासौ प्रैपि पित्रा कलावती । स्वयंवरास्या यद् रेमे त्वां विना न मनः क्वचित् ॥
न कदाप्यनया दृष्टं स्वमातुरपि विप्रियम् ॥ ७८ ॥
गृहाण पाणिना पाणि तदेतस्याः प्रमोदतः । यथा करेणुर्विन्ध्यं वा नेयं ध्यायेत् पितुर्गृहम् ॥ ७९ ॥
तथा विदध्यास्तद्देव ! परप्रेम्णा यथोचितम् । चित्तं चित्रं यदस्माकमप्यरञ्जि गुणैरिह ॥ ८० ॥
अथ श्रीशङ्खभूपोऽवगहो ! विजयभूपतेः । किमियता सञ्जाता गुणिनां धुरि ॥ ८१ ॥
शिशवोऽपि वयं तातविरहान्नृपतेः पदम् । संप्राप्ताः स्मः किमियता सञ्जाता गुणिनां धुरि ॥ ८१ ॥
तदेतस्य गुणांभोधेर्विजयक्ष्माभुजो मया । वचो विधेयमेवेत्याजूहवल्लाग्निकान्नृपः ॥ ८२ ॥
निर्णीते वासरे वयतूर्यनृत्यमहामहम् । विवाहं वरवध्वोश्चाचीकरद्धरणीशभूः ॥ ८३ ॥
गजवाजिरथस्वर्णाद्यदात् स करमोचने । जयसेनकुमारोऽस्थात् तत्राहानि कियन्त्यपि ॥ ८४ ॥
श्रीशङ्खनृपमापृच्छ्य कुमारोऽथ सगद्गदम् । कृतानुगमनो राज्ञा देवशालमगात् क्रमात् ॥ ८५ ॥
कलावत्याः कला काचिदपूर्वैव विभाव्यते । विशालमपि भूपस्य ययारोधि गुणैर्मनः ॥ ८६ ॥
अन्यदा सुखसुप्ता सा निशि श्रीखण्डचर्चितम् । पुष्पदामार्चितं क्षीरोदधिनीरेण पूरितम् ॥ ८७ ॥
त्रिकोशपद्मपिहितं निजोत्सङ्गतलस्थितम् । स्वप्ने वीक्ष्य मृगाक्षी सा हेमकुम्भमजागरीत् ॥ ८८ ॥ ( युग्मम् ).

अथ रत्नशिखनृपोऽपि प्राक् पुण्यात्प्राप्तखेचरैश्वर्यः । जिनगणधरकेवलधरपदारविन्दाभिनतिशीलः ॥ १०१ ॥
संप्राप्य वोधिरत्नं हायनलक्षाण्यनेकशोऽप्यभुनक् । सुखवर्गमुत्तरोत्तरमसौ सुपुण्यात्मनां धुर्यः ॥ १०२ ॥
साकेतपुरे समवसृतमन्यदा सुयशसं मुनिं नत्वा । निजपूर्वभवमपृच्छद् व्याहरदथ सप्रथं भगवान् ॥ १०३ ॥
राजन् ! पञ्चनमस्कृतिमतिनिश्चितमिदमशेषमपि तेऽभूत् । राज्यादि किं न तदियं सुखाय केषामिहामुत्र ? ॥१०४॥
इति मुनिपतिवचनामृतगतदुरितविषः स रत्नशिख एषः । व्रतमादायोदितकेवलर्द्धिरगमत् स सिद्धिसुखम् ॥१०५॥
इति रत्नशिखचरित्रं श्रुत्वा श्रीविमलकीर्त्तिनृप एषः । भववासपाशविमुखः शिवसुखसङ्गे कृतोत्साहः ॥१०६॥
देवरथं निजराज्येऽभिषिच्य जग्राह धर्मवसुपार्श्वे । दीक्षां देवरथोऽपि स रत्नावल्या समं प्रियया ॥१०७॥
सम्यग् गृहिधर्मविधिं प्रपाल्य पुत्रं निवेश्य निजराज्ये । आयुःक्षयादवापच्चानतकल्पे सुरैश्वर्यम् ॥१०८॥ त्रिभिर्विशेषकम् ।
एकस्मिन् सुविमाने द्वावपि तौ प्रेमपेशलौ देवौ । एकोनविंशतिं सागराणि सौख्यं मुदाभुङ्क्ताम् ॥१०९॥

इति पं० श्रीसत्यराजगणिविरचिते श्रीपृथ्वीचन्द्रचरिते देवरथश्रमणोपासकचरितं चतुर्थं भवग्रहणम् ॥ ४ ॥

प्रातर्न्यवेदयद् राज्ञे पुत्रलाभं नृपोऽप्यवक् । बभार गर्भं सा देवी रत्नगर्भेव सेवधिम् ॥ ८९ ॥
प्रायशः प्रथमं पुत्री प्रसूते पितृवेश्मनि । पितेत्याप्तनरान् प्रैषीत् तदानयनहेतवे ॥ ९० ॥
जयसेनोऽङ्गदयुगं तत्करे प्राहिणोत् स्वसुः । राज्ञो दिव्यदुकूलानि प्रादात् प्राभृतहेतवे ॥ ९१ ॥
अथ क्रमात् समाजग्मुस्ते शङ्खपुरमुत्सुकाः । सर्वेऽप्याप्तनराः सायमत्रात्सुर्दत्तसद्मनि ॥ ९२ ॥
अथ भावितियोगेन तत्र देवी कलावती । ददृशे तैः समायाता ते तस्यै ददुरङ्गदौ ॥ ९३ ॥
प्रमोदात्तौ तदादाय गता सा निजमन्दिरम् । प्रत्यूषे दर्शयिष्यामि भूपतेरिति वादिनी ॥ ९४ ॥
सखीजनसमक्षं तत्परिधायाङ्गदद्वयम् । प्रमोदनिर्भरा यावदालोकत कलावती ॥ ९५ ॥
अत्रान्तरे नृपो देवी गृहमागच्छदुत्सुकः । हर्षकोलाहलं तासां स तत्रावहितोऽशृणोत् ॥ ९६ ॥
ददर्श देवीभुजयोः सङ्गतं चाङ्गदद्वयम् । आख्यन् सख्योऽपि कनेदं ददे देवि ! विभूषणम् ? ॥ ९७ ॥
सोचे यच्चित्तगास्म्येषा यश्च मे मनसि स्थितः । अथवानेन दृष्टेन दृष्टः संपादकोऽस्य सः ॥ ९८ ॥
भुजाश्लिष्टेन चैतेनाश्लिष्टः साक्षान्मयापि सः । न विस्मरति यो जातु क्षणं मे मनसो हलाः ! ॥ ९९ ॥
अगृहीताद्वमुल्लापं निशम्येति विशाम्पतिः । कुविकल्पशतैरीर्ष्यावशत्वेनाप्यगृह्यत ॥ १०० ॥
दध्यौ भूवल्लभश्चित्ताल्हादकः कोऽपि वल्लभः । अस्त्येतस्याः पुनरहं दम्भप्रेम्णा वशीकृतः ॥ १०१ ॥

अथ विज्ञाय तद्भावं स ऊचेऽशोकदत्तया । पूर्णचन्द्र ! समेह्यत्र क्षणं व्रततिमण्डपे ॥ ११ ॥
आगतः सोऽपि तत्रेक्षाञ्चक्रे तां स्नेहनिर्भरम् । अभ्युत्थानासनाद्यां साऽप्यस्मै सत्कृतिमातनोत् ॥१२॥
दध्यौ स पूर्णचन्द्रोऽस्या अहो! काप्यङ्गचारुता । अहो! लीलाविलासोऽयमहो! लावण्यमद्भुतम् ॥१३॥
प्राग्भवप्रेमसंस्कारसंरम्भादिति भूपभूः । मुहुर्मुहुस्तदालोककौतुकाद् विरराम न ॥ १४ ॥
अवोचत् पूर्णचन्द्रस्तां पूर्णचन्द्राननेऽधुना । वीणां वादय सा व्रीडावनतास्याऽभवत् तदा ॥ १५ ॥
अशोकदत्तावादीत् त्वत्पुरः सुभग ! लज्जते । अविनीतेत्यसौ तन्न कलनीया त्वयाऽनघ ! ॥ १६ ॥
अयं विपञ्चीं छन्दामीत्युक्तिदक्षाय सा ददौ । पूर्णचन्द्रकुमारायाशोकदत्ताऽपि तां द्रुतम् ॥ १७ ॥
एवं मिथः कथोद्देशलेशपेशलयोस्तयोः । आगतैका सखीकन्या जनन्या इत्यभाषत ॥ १८ ॥
अहो ! अभिनवो यूनोः सङ्गोऽयमिति वाक्परा । सा पुष्पसुन्दरीमूचे स्थिताऽसि किमियच्चिरम्? ॥१९॥
यत् त्वां विना जयादेवी भुङ्क्ते नाद्य त्वमेहि तत् । श्रुत्वेति साप्यनिच्छन्ती प्राप्ता निजनिकेतने ॥२०॥
पूर्णचन्द्रमुखी पूर्णचन्द्रं चित्ते स्मरन्त्यथ । काऽपि नापद् रतिं तुच्छाम्भसि मत्स्यीव सानिशम् ॥२१॥
अथ विज्ञाततच्चित्ताशयाः सख्यो जगुर्गिरम् । स्वसर्विज्ञो वयं नूनं त्वन्मनोदुःखकारणम् ॥ २२ ॥
शृणु तच्छमनोपायमपि यज्जनकोऽद्य ते । अस्माभिः शुश्रुवे देव्या सममालापयन्निति ॥ २३ ॥

विनोदमात्रमेवास्मि तदिमां वंशवैरिणीम् । स्वैरिणीं द्राग् निहन्म्येष यद्वास्यां दयितं च तम् ॥ १०२ ॥
अहो! अकार्यकारित्वमहो ! धाष्टर्यविजृम्भितम । करिकर्णचल चित्तमहो ! नारीषु दृश्यते ॥ १०३ ॥
इति कोपकरालोऽयं भूपालोऽप्यविमृश्यकृत् । निशि निष्करुणं नाम भटमादिष्टवानिति ॥ १०४ ॥
कोऽपि वेत्ति यथा नैव तथैतत् कृत्यमाचर । देवीं कलावतीमाशु त्यज भोः ! निर्जने वने ॥ १०५ ॥
स्यन्दनं प्रगुणीकृत्य देवीमागत्य सोऽब्रवीत् । गजस्थः कुसुमोद्यान गतो रन्तुमिलापतिः ॥ १०६ ॥
आदिष्टोऽस्मि नृपेणाहं त्वदानयनहेतवे । प्रापये तत्र भवतीं तदारोह रथं जवात् ॥ १०७ ॥
प्राञ्जलत्वेन सारोहद् रथं तेनेरितौ हयौ । देव्यवोचत् कियद्दूरे नृपः सोऽप्याख्यदग्रतः ॥ १०८ ॥
प्राप्तं पुरो महारण्यं विभाताथ विभावरी । देवी नृपमपश्यन्ती प्रोवाच दृढमाकुला ॥ १०९ ॥
हहा ! निष्करुणारण्यमेतन्नो दृश्यते नृपः । नोद्यानमपि तत्किं भोस्त्वयाहं विप्रतारिता ॥ ११० ॥
न श्रूयते तूर्यरवो न च कोलाहलो नृणाम् । किं स्वप्नमिन्द्रजालं वा कथयैतद् यथास्थितम् ॥ १११ ॥
देवीदीनगिरं श्रुत्वेत्युद्भूतकरुणो भृशम् । नहि निष्करुणो दातुं प्रतिवाक्यमभूत् क्षमः ॥ ११२ ॥
देव्या गाढाग्रहात्रेशादवतीर्य रथादथ । गुरुशोकस्खलद्वर्णमित्युवाच स दुःखतः ॥ ११३ ॥
धिग् मां निष्करुणः सत्यमहं कृत्यमिदं यतः । कारितस्तदहो ! सेवापारवश्यमिदं हि धिक् ॥ ११४ ॥

कालेन निधनं प्राप्तौ पितरौ तद्वियोगतः । दुःखितोऽपि गृहारम्भचिन्तासु व्यापृतोऽभवम् ॥ ३७ ॥
ईर्ष्यालुत्वेन जायानां निर्गन्तुं सदनाद् बहिः । अददानः परविशां प्रवेशाद्यप्यवारयम् ॥ ३८ ॥
प्रतोल्यां तालकं दत्त्वा व्यवहाराय याम्यहम् । कुविकल्पशतैस्तत्र तिष्ठामि न पुनश्चिरम् ॥ ३९ ॥
शुष्कोद्यानमिव त्यक्तं पक्षिभिर्भिक्षुभिर्गृहम् । ततो मे जैनमुनिभिर्विशेषाच्च कृतांहसः ॥ ४० ॥
अथादत्त्वाऽन्यदा द्वारं गते मयि मुनिर्गृहम् । आगाद् नत्वा च तं धर्म शुश्रुवुस्ताः प्रिया मम ॥ ४१ ॥
मुनौ गदति सद्धर्ममागां द्वार्यहमप्यथ । पश्याम्यवहितीभूय यावत् तत्र रहःस्थितः ॥ ४२ ॥
तावत् ता मुनिवक्त्राब्जदत्तनेत्राः पुरः प्रियाः । अपश्यमासनस्थं च मुनिं रूपमहोनिधिम् ॥ ४३ ॥
कोपावेशात् ततो दध्यावहो ! धृष्टोऽधमो मुनिः । स्वच्छन्दं मम कान्ताभिः सह जल्पति निस्त्रपः ॥ ४४ ॥
तदेतस्य स्वहस्तेनाप्यष्टस्वङ्गेषु यष्टयः । पञ्च पञ्च प्रहर्त्तव्या मया दुर्नयकाङ्क्षिणः ॥ ४५ ॥
परं शृणोमि किं तावन्मन्त्रयत्येष इत्यहम् । ध्यायन्नवहितस्तावद् धर्मं सोऽवग् दयामयम् ॥ ४६ ॥
सौभाग्यमारोग्यमयं वपुश्च रूपं परं वाञ्छितभोगसंपत् । स्वर्गापवर्गादिमहासुखानि भवन्त्यहिंसाव्रतपालनेन ॥४७॥
पङ्गुत्वकुष्ठित्वकुणित्वदोषाः कुब्जत्वमन्धत्वमशर्मरोगाः। दौर्भाग्यदौर्गत्यविवर्णताश्च स्युर्जन्तुघातं सृजतामिहैव ॥४८॥
शत्रुञ्जयशूराह्वौ पितृपुत्राविव सुदारुणं दुःखम् । इह परलोके च सहन्ति जन्तवः प्राणिघातेन ॥ ४९ ॥

भृत्येन स्वामिनः कार्यं साध्वसाध्वपि साध्यते । ततो वच्मि रथादस्मादुत्तीर्य स्थीयतामिह ॥ ११५ ॥
अयमीदृग् नृपादेशोऽन्यज्जाने नैव किञ्चन । देवी तद्वज्रपातादप्यधिकं कर्णकर्कशम् ॥ ११६ ॥
वचो निशम्येति रथादुत्तरन्त्यपतद् भुवि । मूर्च्छामगात् क्रमाच्चापचैतन्यं वन्यमारुतैः ॥ ११७ ॥ ( युग्मम् ).
रथारूढः सकरुणं रुदन् निष्करुणोऽप्यगात् । चकार देवी सा तत्र सदैन्यं परिदेवनम् ॥ ११८ ॥
तावन्नृपनियुक्तास्तास्तत्रागुः श्वपचाङ्गनाः । कर्त्तिकां नर्त्तयन्त्यश्च मूर्त्ताः प्रेतप्रिया इव ॥ ११९ ॥
निष्कारणोद्भवत्कोपभृकुटीभङ्गभीषणाः । हा ! दुष्टेऽनिष्टचेष्टे ! त्वं न वेत्सि नृपतेर्नयम् ॥ १२० ॥
वर्त्तसे प्रतिकूलं तत् सहस्व स्वागसः फलम् । इत्यादि परुषैर्वाक्यैस्तर्जयन्त्यः कलावतीम् ॥ १२१ ॥
शङ्ख्या निस्त्रिंशमुच्चख्नुर्बाहू केयूरभूषितौ । अहो ! कर्मविपाकोऽयमनागस्यपि दण्डकृत् ॥ १२२ ॥ ( युग्मम् ).

यत.—

सीता नीता दशास्येन दधौ दुःखं वचोऽतिगम् । नलस्तत्याज निर्व्याजचरितां दयितां वने ॥ १२३ ॥
द्रौपदी वनजं कष्टं सेहे दैहेन कर्मणा । गान्धार्यधाच्छुचं चाङ्गरुहाणामतिदुःसहाम् ॥ १२४ ॥
सेहिरे नित्यमत्यन्तं महासत्यो यदापदम् । तन्नूनं प्राक्तनं कर्म नाभुक्तं क्षीयते क्वचित् ॥ १२५ ॥
ततो हा तात.! हा मातरित्याद्युक्तिपरायणा । भूपीठे लुठिता तारं विललाप कलावती ॥ १२६ ॥

क्रत्वेति निश्चयं गत्वा धनपार्श्वे भवस्थितिम् । निरूप्याबूबुधद् धर्मं नृपं सोऽपि श्रुतोक्तिभिः ॥१३८॥
धरणीशो धरणस्यान्यदा दौष्ट्यस्य कारणम् । अपृच्छद् ज्ञानिनं सोऽपि व्याहरच्छृणु भूपते ! ॥१३९॥
सत्यगीर्द्धर्मशीलश्च दानी सर्वजनप्रियः । धनस्तद्विपरीतस्य द्वेषोऽस्मिंस्तस्य तद् ध्रुवम् ॥ १४० ॥
प्राग्भवीयं पुनः किञ्चिद् वैरं तत्राऽस्ति कारणम् । स मृत्वा धरणोऽत्रैव पुरे श्वपचपुत्र्यभूत् ॥ १४१ ॥
संप्राप्तयौवना पत्या क्रोशन्ती निहता मृता । गणिकाऽभूत् पुरेऽत्रैव भुजगेन विनाशिता ॥ १४२ ॥
अत्रैव रजकस्याभूद् दुहिता रूपदूषिता । मातापित्रोरनिष्ठा च कष्टं तिष्ठति साऽधुना ॥ १४३ ॥
इत्याकर्ण्य स निर्विण्णः संसारार्णवतो भृशम् । धनः श्रामण्यमासाद्य सद्योऽगात् त्रिदशालयम् ॥१४४॥
असत्यगीरकरुणो धरणोऽप्यरुणो रुषा । जन्ममृत्यूर्मिभीमेऽत्र भ्रमिष्यति भवोदधौ ॥ १४५ ॥

पीत्वेति ताः साधुमुखारविन्दात् समुद्भवत्सत्यमरन्दबिन्दून् ।
भावेन भेजुर्व्रतमद्वितीयमपि द्वितीयं सुकृतद्रुमूलम् ॥ १४६ ॥

इति द्वितीयाणुव्रते धनधरणयोः कथानकम् ।

ततो हितं ममैवैतद् यन्नैताः कुपिता अपि । वितथाभिः कथाभिर्मां वञ्चयिष्यन्ति जात्वपि ॥ १४७ ॥
ततोऽमुष्मै यष्टिघाता मया देयास्त्रयस्त्रयः । ध्यायन्निति तथैवास्थामहं तत्रैव गोपुरे ॥ १४८ ॥

नादत्तेऽदत्तमन्यस्य देवाख्यस्तत्र कस्यचित्। अन्यस्य नियमो नास्ति परस्वग्रहणे पुनः ॥ १६१ ॥
अन्यदा तौ बहिर्यान्तौ पश्यतः पथि भूषणम्। अदत्ताद् विरतो देवो नेक्षाञ्चक्रेऽपि तद् दृशा ॥१६२॥
तल्लज्जया यशोऽप्येष तदानीमवधीर्य तत्। मार्गान्तरेण गत्वा च गृहीत्वाऽगोपयद् गृहे ॥ १६३ ॥
दध्यौ स च महात्माऽयमलुब्धो यः परश्रियाम्। तथाऽप्यहं करिष्यामि साधारणमिदं मिथः ॥ १६४ ॥
यशस्तद्भूषणस्वेनाक्रीणात् पण्यं पुरान्तरात्। पश्यन्नायव्ययं देवो वीक्ष्य पण्यं महच्च तत् ॥ १६५ ॥
यशं पप्रच्छ वितथोत्तरं कुर्वंस्तदाऽथ सः। निर्बन्धे प्रोक्तवान् सत्यं देवस्तत् स्वधनाधिकम् ॥ १६६ ॥
पृथक् चक्रे तदाऽनैपीद् यशोऽपि निजसद्मनि। तत् तस्यापहृतं सर्वं निशि तस्यां मलिम्लुचैः ॥१६७॥ ( युग्मम् ).
देवोऽवोचत् सखे ! स्तैन्याहृतं वस्तु न तिष्ठति। कुरु तद्विरतिं तस्मादुरीचक्रे यशोऽपि तत् ॥ १६८ ॥
तदा देशान्तरायातवणिग्भ्यो ददतुश्च तौ। तत् पण्यं द्विगुणो लाभः समभूत् सत्वरं तयोः ॥ १६९ ॥
परस्वविरतौ न्यायनिरतौ तौ ततः परम्। जने देवयशाह्वौ तौ यशः श्रियमवापतुः ॥ १७० ॥
तदित्थं भोः ! नयेनैव बुधैः कार्यं धनार्जनम्। किमायतौ विरसया सखे ! परधनेच्छया ॥ १७१ ॥
तदनाकर्णितमिव वसुदत्तोऽपि संसृजन्। गृह्णंस्तत् कुण्डल बद्धो झटित्येव स तैर्भटैः ॥ १७२ ॥
हृतं तैः सकलं पण्यं मातृदत्तो विषादभाक्। भणितस्तैर्भटैर्भद्र ! मा विषीदैहि पर्षदि ॥ १७३ ॥

तथा च—मनोवाक्कर्मभिर्यद्यस्मिन् भवे न मया निजम्। सच्छीलं खण्डित तन्मे वाहू स्तां पुनरुद्भवौ ॥ १४० ॥
लसच्छीलप्रभावेन सिन्धुदेवी दयापरा। पुनर्नवीकरोति स्म तस्या वाहुद्वयं क्षणात् ॥ १४१ ॥
तद्दर्शनात् सुधासिक्तेवापूर्वं तनुशर्म सा। सुरीवानुभवन्ती स्वपाणिभ्यां सुतमग्रहीत् ॥ १४२ ॥
स्तनन्धयं निजोत्सङ्गमारोप्यामोदत क्षणम्। पुनस्तथाविधं दुःखं स्मृत्वा सा व्यलपद् भृशम् ॥ १४३ ॥
किं जीवितेन मे येनाभवं परिभवास्पदम्। किन्त्वनाथं सुतं मोक्तुं न शक्ता क्षणमप्यमुम् ॥ १४४ ॥
यदन्यच्चिन्तितं दैवादेशादन्यदभूदिह। नह्यभाग्यवतां जातु जायते चित्तचिन्तितम् ॥ १४५ ॥
पुत्रजन्ममहं कर्त्ता पिता चित्ते ममेत्यभूत्। विपाको दारुणस्तत्र सञ्जातो ही! विधेर्वशात् ॥ १४६ ॥
हा! धिक् तुच्छमनोभावान् निःस्नेहान् निर्घृणान् नरान्। विचारयन्ति ये कृत्याकृत्ये नैव कदाचन ॥ १४७ ॥
यत.—तत्क्षणदर्शितरागास्तत्क्षणसंपादितोरुसन्तापाः। दिनकर इवाभिवन्द्या दूरस्थैरेव यत्पुरुषाः ॥ १४८ ॥
विलपन्तीति केनापि वीक्षिता तापसेन सा। नीता कुलपतेरग्रे पृष्टाख्यच्चरितं निजम् ॥ १४९ ॥
रुदन्त्याश्वासिता तेन धीरतामवलम्बय। तापस्यन्तर्गता भद्रे! प्रपालय निजाङ्गजम् ॥ १५० ॥
सर्वं संपत्स्यते नूनमचिराद्रुचिरं तव। इति तत्र कलावत्यप्यस्थात् कुलपतेर्गिरा ॥ १५१ ॥
इतस्ता द्रुतमागत्य सकेयूरं भुजद्वयम्। छिन्नं छन्ने नृपस्याग्रे मुमुचुः श्वपचस्त्रियः ॥ १५२ ॥

यथा—" किं कारणं दैवमलङ्घनीयम् । "

राजपुत्री निजावासमगाद् यामे द्वितीयके । अथागान्मन्त्रिपुत्री साऽप्युदवाक्षीत् तथैव तम् ॥ २१२ ॥

तथैव पुस्तके पादं तृतीयमलिखच्च सा ।

यथा—" तस्मान्न शोचामि न विस्मयो मे " ।

गता सापि निजावासं कृतार्था मन्त्रिणः सुता ॥ २१३ ॥

विवाह्य तं तथैवासौ पुस्तकं वीक्ष्य विस्मिता । यामे तृतीये तुर्यं चालिखत् तं श्रेष्ठिपुत्र्यपि ॥ २१४ ॥

यथा—" यदस्मदीयं नहि तत् परेषाम् " ॥ १ ॥

गता सा तुर्ययामेऽथ पुरोहितसुता पुनः । अलिखद् विदितश्लोका श्लोकमित्युल्लसन्मतिः ॥ २१५ ॥

व्यवसायं दधात्यन्यः फलमन्येन भुज्यते । पर्याप्तं व्यवसायेन प्रमाणं विधिरेव नः ॥ २१६ ॥

ताश्चतस्रोऽपि वृत्तान्तं निजागःशङ्कया च तम् । प्रागेव स्वस्वमातृभ्योऽशंसन् विनयतो नताः ॥२१७॥

ता अप्यूचुः स्वभर्तृभ्यस्ततः प्रातर्न लप्स्यते । पथिकोऽयमिति प्रेष्यैर्द्राक् तमानाययन्नृपः ॥ २१८ ॥

इतः पुरन्दरो रात्रौ तमन्विष्याखिले पुरे । प्राप्तोदन्तस्ततः प्रातर्नृपोपान्तमुपागमत् ॥ २१९ ॥

तुष्टाः सर्वेऽपि तं वीक्ष्य तत्पुण्याधिक्यविस्मिताः ग्रामपञ्चशतीं भूपोऽप्यदात् तस्मै करग्रहे ॥ २२० ॥

सञ्जातसुरताशांस्तान् सुन्दरीमभिधावतः । ज्ञाततच्छीलमाहात्म्याऽस्तभ्नात् काननदेवता ॥ २५५ ॥
मन्त्रसिद्धोऽथ तान् काष्ठप्रायान् वीक्ष्य भयद्रुतः । गृहीत्वा सुन्दरीपादौ विनयेन व्यजिज्ञपत् ॥ २५६ ॥
महासति ! मया ज्ञातं त्वन्माहात्म्यं नहीदृशम् । तेनेदं विहितं भूयः करिष्ये न कदाप्यदः ॥ २५७ ॥
क्षमस्वागोऽभयं देहि ममेत्यालपतोऽपि च । अलब्धप्रतिवाक्यस्य विभातेयं विभावरी ॥ २५८ ॥
सपौरः शूरभूपोऽपि तत्रागाद् वीक्ष्य सुन्दरीम् । तांस्तथास्थांश्च पप्रच्छ न त दुर्ललिता जगुः ॥ २५९ ॥
सुन्दर्यपि न वेद्मीति जल्पन्त्यस्थात् त्रपानता । तावत् प्रार्थ्याभयं मन्त्रसिद्धस्तत्त्वार्थमूचिवान् ॥ २६० ॥
नृपः पापात्मनः तांश्चाक्षिपच्चारकवेश्मनि । ऊचे सिद्धं च हा पापिन् ! ममाप्यन्तःपुराङ्गनाः ॥ २६१ ॥
हरिष्यसीति दण्डार्होऽप्यभयं श्रावितोऽसि यत् । तन्मुक्तोऽसीति निर्भर्त्स्य नृपस्तं निरवासयत् ॥२६२॥ ( युग्मम् ).
न्यपतद् नृपतिस्तत्र सपौरः सुन्दरीपदोः । वसुपालोऽपि तत्रागाच्छ्रेष्ठी श्रेष्ठचरित्रभृत् ॥ २६३ ॥
नृपः करेणुमारोह्य पुरीं प्रावेशयच्च ताम् । प्रसिद्धा तत्प्रभृत्यासीत् सा जने शीलसुन्दरी ॥ २६४ ॥
इति निष्कलङ्कशीलं प्रपाल्य सा शीलसुन्दरी प्रान्ते । प्राप्य सुरलोकलीलामशीलयत् सौख्यलक्षाणि ॥ २६५ ॥
इतरे कृतसर्वस्वापहाराश्चारकौकसि । चिरं संक्लिश्य मृत्वाऽगुः पृथिवीं शर्कराप्रभाम् ॥ २६६ ॥

परिपाल्य चिरं राज्यं हत्वा शत्रून् महोत्कटान्। हतविग्रहतं भावि त्वया मुक्तं क्षणादिदम् ॥ १६६ ॥
कृत्वा कुलक्षयं मा स्म पूरयेस्त्वं मनोरथान्। रिपूणां देव ! तत्सद्यः प्रसीद करुणापर ! ॥ १६७ ॥
अङ्कुशं मत्तदन्तीवागणयन्मन्त्रिणां वचः । आगमन्नन्दनं भूपः प्रविविक्षुर्हुताशनम् ॥ १६८ ॥
क्षणेन लभ्यते याम इत्याद्युक्तिविशेषवित् । संप्राप्यावसरं भूपं गजश्रेष्ठी व्यजिज्ञपत् ॥ १६९ ॥
देवोद्यानेऽत्र देवाधिदेवस्य प्रथमार्हतः। प्रासादोऽस्त्यत्र देवार्चादिकं पुण्यं विधीयते ॥ १७० ॥
चतुर्ज्ञानधरश्चात्रामिततेजोऽभिधाधरः । गुरुस्तमपि वन्दित्वा कुरु जन्म फलेग्रहि ॥ १७१ ॥
इष्टं वैद्योपदिष्टं च मन्वान इति भूपतिः। इदं पथ्यदनं चापि परलोकाध्वयायिनाम् ॥ १७२ ॥
गतोऽर्हद्भवनं भूपो विधिवज्जिनमार्चयत्। नत्वा गुरुं गिरं तस्य स कृपामसृणोऽशृणोत् ॥ १७३ ॥
यथा—अकूपार इवापारः संसारो दुःखवीचिभिः। वोहित्थमिव तत्रैष राजते धर्म आर्हतः ॥ १७४ ॥
क्रोधाद्यरिजयेनैवाराध्यते स जनैर्ननु। क्रोधान्धो यन्न वेत्त्यङ्गी कृत्याकृत्ये हिताहिते ॥ १७५ ॥
क्रोधोन्मत्तस्तत्तदेवाचरेज्जन्तुर्विदन्नपि । येनात्रामुत्र चाप्युच्चैरथ दुःखौघभाग् भवेत् ॥ १७६ ॥
अभूद् भूप! तवाप्येषोऽनर्थः क्रोधवशात्मनः। हित्वा तत्त्वार्थिभिः क्रोधं तद्धर्मे धीर्विधीयताम् ॥ १७७ ॥
परप्राणिवधात् स्वस्य घातः स्यादधिकांहसे। मत्वेति भूप ! त्वमपि त्यजामुं कुग्रहग्रहम् ॥ १७८ ॥

मन्त्रानीतैर्मोदकाद्यैस्तत्र भुक्तावुभा अपि । पप्रच्छ सिद्धं स वणिक् कुतो वः शक्तिरीदृशी ? ॥३३०॥
सोऽवग् वेतालमन्त्रं मे कोऽपि कापालिको ह्यदात् । तत्प्रभावेन सर्वाऽपि लक्ष्मीर्जायेत देहिनाम् ॥३३१॥
वेतालमन्त्रं तं तस्मात् स जग्राह वणिग्वरः । निश्चक्राम च ततोऽस्थात् सुखं स्वमातुलौकसि ॥३३२॥
अन्यदा कृष्णभूतेष्टानिशि प्रेतवने स च । ययौ साधयितुं मन्त्रं चक्रे जापं कृताहुतिः ॥ ३३३ ॥
विभीषिकाभिः क्षुब्धस्य तस्य मन्त्रपदं तदा । विस्मृतं कुपितस्तावद् वेतालः कालवत् क्रुधा ॥ ३३४ ॥
हत्वा दण्डेन तं दूरमक्षिपत् सोऽथ मूर्च्छितः । स्वस्थीकृत्य मातुलेन द्रुतं निन्ये जयस्थलम् ॥ ३३५ ॥
हस्यमानो जनैस्तत्राभाग्यशेखर इत्यसौ । त्रपयाऽऽत्मानमुद्बध्य परासुत्वं गतोऽचिरात् ॥ ३३६ ॥

इति परिग्रहतोऽविरतोऽसकौ गुणधरो बहुलोभसमाकुलः ।
विविधमण्डलमण्डलमभ्रमन्न धनलेशमवाप सपापहृत् ॥ ३३७ ॥

गुणाकरः पुनः सोऽयं स्फुरत्तरगुणाकरः । नयार्जितश्रीः परमां प्रसिद्धिं प्राप्तवान् भुवि ॥ ३३८ ॥
श्रुत्वा गुणधरस्याथ वृत्तान्तं तं तथाविधम् । विशेषादाप्तवैराग्यः प्रपाल्य तदणुव्रतम् ॥ ३३९ ॥
त्रिदिवं प्रापदन्यस्तु वराको नारकादिषु । सञ्जातो दुःखलक्षाणां स्थानं गुणधरो वणिक् ॥ ३४० ॥

इति पञ्चमाणुव्रते गुणाकरगुणधरकथा ।

ततो मनः समाधाय क्षमामाधाय चेतसि । प्रतिपद्यार्हतं धर्मं परत्रात्र सुखी भव ॥ १७९ ॥

अन्यच्च–निमित्ततो वयं विद्म एवं ते कुर्वतः सतः । तस्या अखण्डदेहायाः सङ्गमोऽपि भविष्यति ॥ १८० ॥

पुनरभ्युदयं प्राप्य प्रमोदभरनिर्भरः । त्यक्त्वा राज्यं परिव्रज्यामचिरात् त्वं गृहीष्यसि ॥ १८१ ॥

दिनमेकं प्रतीक्षस्व ततो मद्वचसा नृप ! । सञ्जातप्रत्ययः पश्चाद् विदध्यास्त्वं यथोचितम् ॥ १८२ ॥

इति सूरिगिरा भूरिप्रमदावेशपेशलः । भूकान्तः स गुरूपान्तगतोऽतिक्रान्तवानहः ॥ १८३ ॥

तत्रैव निशि चोद्याने शयितो दयितो भुवः । स्वप्नमस्वप्नतुल्योऽसौ निशाशेषे व्यलोकयत् ॥ १८४ ॥

यथा कुत्रापि कल्पद्रौ निष्पन्नैकफला लता । केनापि सहसा छिन्ना पपात धरणीतले ॥ १८५ ॥

पुनर्झटिति निष्पन्नमनोहरफला सती । कल्पशाखिनि संलग्ना सा तत्रैव स्वयं लता ॥ १८६ ॥

प्रातः प्रमुदितोऽपृच्छद् गुरून् स्वप्नं त ऊचिरे । कल्पद्रुः स भवान् छिन्नलता सा वियुता प्रिया ॥ १८७ ॥

पुनर्मनोहरफला संलग्ना तत्र या लता । सा सपुत्राद्य ते नूनं मिलिष्यति कलावती ॥ १८८ ॥

एवमस्त्वित्यथो जल्पन् नृपो दत्तं समादिशत् । यदकृत्यं कृतं तावन्मर्त्तव्यं तन्मयाधुना ॥ १८९ ॥

तथापि तत्र गत्वा त्वं जीवन्तीं तामिहानय । मृताया निश्चयं यद्वा पश्चात् कुर्वे यथोचितम् ॥ १९० ॥

दत्तस्तत्र गतोऽपृच्छत् तापसं कमपि स्फुटम् । भोः ! काप्यत्र त्वया दृष्टाऽद्य कल्ये कापि वर्णिनी ? ॥ १९१ ॥

आसन्नप्रसवा चासौ प्रसूता नाथवा मुने ! । वदैतत् सकलं सत्यं श्रोतुमुत्कं मनो मम ॥ १९२ ॥
मुनिराख्यत् कुतोऽत्रागाः सोऽवक् शङ्खपुरादतः।ऋषिराख्यत् किमद्यापि भूपोऽस्यां न त्यजेत् क्रुधम् ॥ १९३ ॥
पुनरन्वेषयेद् येन दत्तोऽवग् महती कथा । इयं वयं तूत्सुकाः स्मो वक्तुं संप्रति न क्षमाः ॥ १९४ ॥
परं न पश्येज्जीवन्तीं नृपः सद्योऽद्य यद्यमूम् । ज्वलति ज्वलनेऽवश्य तज्जुहोति निजानसून् ॥ १९५ ॥
यदि वेत्सि ततो ब्रूहि तद्वृत्तान्तं कमप्यहो ! । चतुराश्रमभर्तुर्यज्जीवितं नृपतेरियम् ॥ १९६ ॥
श्रुत्वेति तापसोऽनैषीद् दत्तं कुलपतेः पुरः । ज्ञातवृत्तः स दत्तस्यादर्शयत् तां कलावतीम् ॥ १९७ ॥
दत्तं वीक्ष्य रुदन्ती साऽऽश्वासिता तेन सद्गिरा । पतित्वा पादयोश्चायं स्वयमेतां व्यजिज्ञपत् ॥ १९८ ॥
मुञ्च कोपं क्षमस्वागः कालक्षेपो न युज्यते । त्वां विनाग्निप्रवेशोत्कं भूपतिं रक्ष भामिनि ! ॥ १९९ ॥
ततः कुलपतिं पृष्ट्वा रथमारुह्य सोऽचलत् । नृपस्तां वीक्ष्य हृष्टोऽपि त्रपयाभूदधोमुखः ॥ २०० ॥
संप्राप्यावसरं देवीमवदद् भूपतिः प्रिये ! । विनापराधं मूढेन कृतो दण्डो मुधा तव ॥ २०१ ॥
तथा च—वञ्जुलद्रौ फलं नास्ति वटोदुम्बरयोः सुमम् । तथैव देवि ! त्वद्देहे दोषलेशो न विद्यते ॥ २०२ ॥
अज्ञानतिमिरान्धेन मया त्वय्यपि - दोषाः संभावितास्तत्त्वं क्षमस्वाशेषमप्यदः ॥ २०३ ॥
विधाय विविधालापानित्युभौ भास्करोदये । प्रणम्य तं गुरुं तस्य देशनां शृणुतो मुदा ॥ २०४ ॥

देशनान्तेऽथ पप्रच्छ गुरून् भूपः कृतानतिः। भगवन्! प्राग्भवे चक्रेऽनया किं कर्म कर्कशम्? ॥ २०५ ॥
निरागसोऽपि येनास्या अहमच्छेदयं भुजौ ।- गुरुराख्यद् विदेहेऽत्र महेन्द्रपुरपत्तनम् ॥ २०६ ॥ ( युग्मम् ).
तत्रासीत् त्रासितारातिर्नृपतिर्नरविक्रमः । पत्नी लीलावती तस्य तयोः पुत्री सुलोचना ॥ २०७ ॥
प्राप्तापि यौवनं साभूत् केलिकौतुककर्मठा । शुद्धशीला सलीलापि कृतहीला मनोभवे ॥ २०८ ॥
पितुरङ्कस्थितान्येद्युर्नृपतेरुपदागतम् । कृत्वा कीरं करे कम्रं कुमारी तमपाठयत् ॥ २०९ ॥
क्रीडायै तं गृहीत्वाथ न्यास्थत् सा स्वर्णपञ्जरे । दाडिमीहारहूरादिफलालीं चाप्यबूभुजत् ॥ २१० ॥
स्वाङ्कस्थं पञ्जरस्थं वा तमेकं मेचकं शुकम् । उरःस्थं वा करस्थं वाऽपाठयत् सा सदा मुदा ॥ २११ ॥
आसने शयने याने भोजने राजसंसदि । आत्मानमिव तं कीरं साऽमुञ्चन्न कदाचन ॥ २१२ ॥
अन्यदा सा पुरोद्याने कुसुमाकरनामनि । शुकेन पञ्जरस्थेन सखीभिश्च युता गता ॥ २१३ ॥
जिनेन्द्रालयमालोक्य तत्र साथ सुलोचना । सीमन्धरजिनं नत्वा तुष्टा तुष्टाव भक्तितः ॥ २१४ ॥
जिनार्चां वीक्ष्य कीरोऽपि जातजातिस्मृतिस्तदा । प्राग्जन्म निजमस्मार्षीद् यदभूवं यतिः पुरा ॥ २१५ ॥
अधीत्य शुद्धसिद्धान्तं कृतोपधिपरिग्रहः । विराधितव्रतो मृत्वाऽभूवं कीरोऽत्र जन्मनि ॥ २१६ ॥
धिग्मां यद्धस्तसंस्थेऽपि ज्ञानदीपे विभास्वति । मोहान्धो न्यपतं तिर्यग्भवावटसुसङ्कटे ॥ २१७ ॥

दिष्ट्याधुनापि दृष्टोऽस्ति चेत्प्रभुर्भवपारदः । भोक्ष्येऽतो जिनमानम्येत्यभिजग्राह कीरराट् ॥ २१८ ॥
कुमारी शुकमादायाजगाम स्वनिकेतनम् । पक्षिणं पञ्जरात् कृष्ट्वा यावद् भोक्तुमुपाविशत् ॥ २१९ ॥
तावन्नमोऽर्हद्भ्य इति ब्रुवन्नुड्डीय सोऽप्यगात् । जिनं नत्वा फलाहारं कुर्वन्नास्ते स कानने ॥ २२० ॥ (युग्मम्).
सुलोचनाथ सा नैव भुङ्क्ते तद्विरहासहा । अहर्निशं महाक्रन्दपरा तिष्ठति दुःखतः ॥ २२१ ॥
अथ राज्ञा नियुक्तैस्तैः पत्तिभिः पाशपातनात् । बद्ध्वा शुकः समानीतोऽर्पितस्तस्यै प्रमोदतः ॥ २२२ ॥
कुमारी तं गृहीत्वा चाक्षिपत् कर्कशया गिरा । रे रे ! गतः क मां मुक्त्वा स्मरेस्त्वं यद्गतं पुरा ॥ २२३ ॥
अतः परं न दास्यामि निर्गन्तुं त्वां कदाप्यहम् । लुलाव पक्षावित्युक्त्वाऽक्षिपत् सा तं च पञ्जरे ॥ २२४ ॥
दध्यौ सुधीः शुकोऽप्यन्तर्धिक् पराधीनदेहिनः । परायत्तोऽङ्गभृत्स्वस्य हितं नाचरितुं क्षमः ॥ २२५ ॥
यत.—हठान्नीचतरं कार्यं कार्यते मार्यतेऽपि च । नरकावासदेशीयां धिक् परायत्ततामहो ! ॥ २२६ ॥
तपःक्रियाद्यनुष्ठानं स्वाधीनो न व्यधां तदा । अतः स्तोकमिदं मेऽत्र सहिष्येऽथ विडम्बनाम् ॥ २२७ ॥
जिनास्यपद्ममप्येष वीक्षितुं न क्षमोऽधुना । इत्यश्रुमिश्रनयनोऽनशनं स प्रपन्नवान् ॥ २२८ ॥
पञ्चभिर्वासरैर्मृत्वा सौधर्मेऽसौ सुरोऽजनि । सुलोचनापि तमनु मृता तस्यैव देव्यभूत् ॥ २२९ ॥
ततश्च्युत्वा क्रमात् शङ्ख इत्यभूद् भूपतिर्भवान् । सुलोचनापि च्युत्वाभूत् सकलासौ कलावती ॥ २३० ॥

यच्छुकस्यानया च्छिन्नौ पक्षौ प्राच्यभवे रुषा। तेनात्रास्या भुजौ भूप! भवानच्छेदयत् क्रुधा ॥ २३१ ॥
इति प्राग्भववृत्तान्तं श्रुत्वाऽसौ सद्गुरोर्मुखात्। भूवासवः सभार्योऽभूज्जातजातिस्मृतिस्तदा ॥ २३२ ॥
प्राप्तबोधिर्भवाम्भोधिमुत्तितीर्षुर्गुरून् जगौ। कियत्कालममुं बालं पालयन्नस्मि सांप्रतम् ॥ २३३ ॥
व्रतमङ्गीकरिष्यामि सुतेऽस्मिन् राज्यधूर्वहे। सांप्रतं गृहिधर्मं मे दत्स्व स्वच्छमते! यते! ॥ २३४ ॥
क्रमेण पूर्णकलशं नाम्नानलसमङ्गजम्। निवेश्य राज्ये प्रव्रज्यां तावङ्गीचक्रतुर्मुदा ॥ २३५ ॥
मृत्वा कालेन सौधर्मे सञ्जातौ त्रिदशोत्तमौ। पूर्वप्रेम्णा च तत्रापि प्रीतिभावमुपेयतुः ॥ २३६ ॥

इति श्रीसत्यराजगणिविरचिते श्रीपृथ्वीचन्द्रमहाराजर्षिचरिते श्रीशङ्खनृप-
कलावतीचरितनिरूपणं प्रथमं भवग्रहणं संपूर्णम् ॥

# द्वितीयो भवः ।

अथास्ति भरतक्षेत्रे मणिपिङ्गलमण्डले । पोतनाह्वपुरं तत्र नृपः शत्रुञ्जयाभिधः ॥ १ ॥
वसन्तसेना तस्यासीद् राज्ञी लक्ष्मीर्हरेरिव । शचीव पुरुहूतस्य मृडानी धूर्जटेरिव ॥ २ ॥
स शङ्खनृपजीवोऽथ मराल इव मानसे । प्राप्तपद्माकरस्वप्नात् तस्याः कुक्षाववातरत् ॥ ३ ॥
गर्भानुभावतो दीनादीनां दानैकगोचरः । सञ्जातो दोहदो देव्याः सद्यो भूपोऽप्यपूरयत् ॥ ४ ॥
रविं प्राचीव सद्रत्नं रोहणोर्वीव सा सुखात् । प्रसूता भुवनानन्ददायकं दारकं क्रमात् ॥ ५ ॥
वर्द्धापितो नृपो दास्या ददेऽस्याः पारितोषिकम् । जनहर्षावहं चापि व्यधाज्जन्ममहामहम् ॥ ६ ॥
कमलाकरसुस्वप्नानुसारान्निर्ममे नृपः । तस्याह्वां कमलसन इति सूनोः परिस्फुटम् ॥ ७ ॥
शुक्लपक्षे शशीवासौ क्रमाद् वृद्धिमथाप्नुवन् । त्यक्तबाल्यवयाः प्रापद् यौवनं पावनं वयः ॥ ८ ॥
स परं प्राग्भवाभ्यासाद् विमुखो विषयेष्वभूत् । प्राग्भवीयो हि संस्कारो यज्जन्तूननुवर्त्तते ॥ ९ ॥
सोऽन्यदा बहुधाऽभ्यस्यन् सततं सकलाः कलाः । क्रीडायै सखिभिः साकं प्रययौ नन्दनं वनम् ॥ १० ॥

तदा सनाथं भुवनं मन्येऽवग् भूभुगङ्गभूः । नाहं नाथः परस्त्रीणां स्वप्नेऽपि स्यां हि सुन्दरि ! ॥ २४ ॥ (युग्मम्).
परस्त्रीषु च शस्त्रीषु येषां समरसं मनः । नमस्तेभ्यः समस्तेभ्यः प्रशस्तेभ्यस्त्रिधा मम ॥ २५ ॥
दीनादीनामहं नाथो भवामि परिपालनात् । न पुनः प्राणनाशेऽपि कुर्वे सङ्गं परस्त्रियः ॥ २६ ॥
सोचे यदीदृशगुणस्ततो मच्चित्तहार्यसि । सहालमनयालापेनेति जल्पन् कुमारराट् ॥ २७ ॥
गतस्ततो द्रुतं गेहमध्यादत्रान्तरे पुरः । नरः कोऽपि गिरा गर्जन् तर्जयन्निदमब्रवीत् ॥ २८ ॥ (युग्मम्).
प्रविश्य रे ! रे ! किं शून्यसदने सारमेयवत् । निरगा यदि शूरोऽसि तत्तिष्ठाभीष्ट ! मत्पुरः ॥ २९ ॥
कुमारः केशरीवाभिमुखीभूयाभणच्च तम् । किं रे ! स्वच्छन्दचारित्वं पारीन्द्रस्य निवारयेः ॥ ३० ॥
सोऽवक् सिंहोऽसि चेत् सत्यं तच्छस्त्रं मे सहिष्यसि । कुमारोऽवक् प्रहर भोः ! सोऽवक् प्राक् हन्तु भोः ! भवान् ॥ ३१ ॥
भूपभूरथ तं प्राह नाहमप्रहरत्यहो ! । प्राग् निहन्मीति सत्त्वाढ्यं तं वीक्ष्याख्यत् स पूरुषः ॥ ३२ ॥
यद्येवं सत्त्ववांस्तत् त्वं भोक्ष्यस्यङ्गश्रियं हि ताप् । क्षन्तव्यं यन्महासत्त्व ! खेदितोऽसि चिरं मया ॥ ३३ ॥
यच्च स्वकार्यलोभेन पितृभ्योऽसि वियोजितः । यच्च सत्त्वपरीक्षायै स्त्रीपुंरूपेण मोहितः ॥ ३४ ॥
अहं चम्पापतेरेषोऽस्मि सान्निध्यकरः सुरः । अङ्गदेशश्रियोऽधीशं त्वां विधित्सामि सांप्रतम् ॥ ३५ ॥
तन्न कार्यो मनाक् खेद इत्युक्त्वाऽन्तरधात् सुरः । कुमारोऽपि च विज्ञाताङ्गश्रीनामार्थविस्मितः ॥ ३६ ॥

भ्रमन् पुरः सरः प्राप्य व्यधान्मज्जनमञ्जसा । स विशालरसालद्रुच्छायां यावच्छ्रितोऽस्ति च ॥ ३७ ॥
तावत् कोऽपि पुमानेत्य तमित्याख्यत् प्रभो! शृणु। चम्पेशो गुणसेनाख्यः क्रीडार्थं वनमागतः ॥ ३८ ॥
तेनाहं प्रहितो देव ! त्वदानयनहेतवे । तत् तत्रागमनायामुं हयमारोह सत्वरम् ॥ ३९ ॥
स एव कारणं वेद नेदमस्मि मृषा वदन् । समारुह्य कुमारस्तं हयं तत्रागमत् ततः ॥ ४० ॥
तत्राशोकतरोर्मूले निषण्णस्य महीपतेः । नमन् दृक्संज्ञया तेन निषिद्धो भूधवाङ्गभूः ॥ ४१ ॥
किमेतदिति चिन्तार्त्तः स्वमन्त्रिमुखदत्तदृक् । स भूपस्तं स्खलद्वर्णमेवमालापयद् यथा ॥ ४२ ॥
सुसुसुन्दर! पृच्छामः कककस्मादागतः किमेकाकी?। कुकुकुकुकुशलं तततव ससससससस्वागतं तेऽद्य॥ ४३ ॥
दध्यौ कमलसेनोऽथ कथमीदृग्गुणोऽप्यहो !। अदूषि जिह्वाजाड्येन नतिं वा वारयेत् कथम्? ॥ ४४ ॥
तावन्मन्त्र्यवदत् तस्य देव ! श्रान्तोऽस्ति राजसूः । भवन्तोऽपि ततः सर्वे प्रविशामोऽधुना पुरीम् ॥ ४५ ॥
सर्वं यदिष्टं देवस्य द्विधाऽप्येष विधास्यति । इत्युल्लापपराः सर्वे गताश्चम्पापुरीमथ ॥ ४६ ॥
मन्त्री तं स्वगृहे नीत्वा कृतमज्जनभोजनम् । सुखासनं समध्यास्य कुमार समुदाहरत् ॥ ४७ ॥
परोपकारसार ! त्वं मदुक्तमवधारय । विधाय करुणामङ्गदेशराज्यमुरीकुरु ॥ ४८ ॥
पूरयास्मत्प्रभोश्चाथ कृपानाथ ! मनोरथान् । श्रुत्वेत्यवक् कुमारोऽपि समारोपितविस्मयः ॥ ४९ ॥

चित्रं सचिव ! यद् विद्यमानेऽप्येकमभौ परः। विधीयते नृपस्तत् त्वत्प्रभोः कोऽस्ति मनोरथः ? ॥ ५० ॥
तत् तत्त्वं कथ्यतां मन्त्रिन्नेतच्चित्रमहो ! मम। अवोचत् सचिवोऽप्येवं यत् कुमारावधार्यताम् ॥ ५१ ॥
अस्यामेव महापुर्यां श्रीकेतुरिति भूपतिः। विजयन्ती जयन्तीव जयन्तीमस्य देव्यभूत् ॥ ५२ ॥
अन्यदाऽऽस्थानमासीने नृपे कोऽत्र सुखी पुरे ?। तदा सभासदामेषा प्रवृत्तिरभितोऽभवत् ॥ ५३ ॥
केनापि स्फुटविज्ञाततत्त्वेन जगदे तदा। पुर्यस्यां सुखभागेको महेभ्यो विनयन्धरः ॥ ५४ ॥
यस्य श्रीर्धनदस्येव ज्ञातृत्वं गीष्पतेरिव। सौन्दर्यं मन्मथस्येव गाम्भीर्यं जलधेरिव ॥ ५५ ॥
चतस्रश्चतुरा यस्य रूपनिर्जितमेनकाः। मान्या आज्ञाविधायिन्यो भार्या भार्याश्च सन्त्यहो ! ॥ ५६ ॥
अत्रान्तरे परः प्रोचे वणिक्स्त्रीवर्णनेन भोः !। किं हीलयसि भूपानामवरोधवधूरपि ? ॥ ५७ ॥
परोऽवोचदहो ! हीलाऽन्यस्य किं सद्गुणस्तवात् ?। गुणाढ्यं वस्तु सर्वोऽपि वर्णयेदिति मे मतिः ॥ ५८ ॥
एतच्च सर्वलोकेऽपि प्रसिद्धं वर्त्ततेऽनघ !। पौर्यः सर्वाश्च तद्रूपसौभाग्याद्यास्तिहेतवे ॥ ५९ ॥
कुर्वन्त्यनेकदेवीनामुपयाचितकान्यहो !। ललितं जल्पितं चासां वर्णिन्यो वर्णयन्त्यलम् ॥ ६० ॥ ( युग्मम् ).
इत्यादि वहुधा तासां श्रुत्वा वर्णनमद्भुतम्। पीतासव इवैतासु रागान्मत्तोऽभवन्नृपः ॥ ६१ ॥
यतः—तथा दृष्टे न रज्यन्ति गुणिन्यपि जने जनाः। निर्गुणेऽपि यथाऽदृष्टे पराभिहितवर्णने ॥ ६२ ॥

स्मरान्धस्य ततो भूमिधवस्याश्रयदञ्जसा । धर्मधीर्मनसोऽशेषा किमकृत्यं हि कामिनाम् ? ॥ ६३ ॥

यतः—कामान्धो न भवेद् यावद् धीमांस्तावत् पुमानिह । इलापुत्रो नटीसक्तः स्वकुलं ह्यकलङ्कयत् ॥ ६४ ॥

एकतः कुलमालिन्यमन्यतो मदनव्यथा । ततो व्याघ्रतटीन्यायाद् दुःखितोऽभूत् तदा नृपः ॥ ६५ ॥

दध्यौ च वणिजस्तस्य दोषमुत्पाद्य कञ्चन । आदास्ये तस्य ताः कान्ता जने नेत्ययशोऽपि मे ॥ ६६ ॥

निश्चित्येत्यवदद् भूपः पुरोधसमसौ रहः । कृत्वा शाठ्येन भोः ! मैत्रीं महेभ्ये विनयन्धरे ॥ ६७ ॥

लेखयित्वाऽमुना भूर्जे श्लोकमेनं रहो मम । समर्पय तथा भद्र ! यथा वेत्ति न कश्चन ॥ ६८ ॥ ( युग्मम् ).

यथा—अद्याभाग्यनियोगेन त्वद्वियोगेन सुन्दरि ! । शर्वरी सा त्रियामाऽपि शतयामेव मेऽभवत् ॥ ६९ ॥

इति राज्ञोदितः सोऽथ पुरोधा विनयन्धरे । कृत्वा मैत्रीं लेखयित्वा श्लोकं तं नृपतेर्ददौ ॥ ७० ॥

नृपोऽप्यनुष्टुभं तं च भूर्जपत्रे स्थितं ततः । निबध्य गन्धपुटके चेट्याथानाययत् सदि ॥ ७१ ॥

तं श्लोकं दर्शयित्वाऽथ पौरामात्यान् नृपो जगौ । देव्या गन्धपुटेऽलेखि केनायं तत्परीक्ष्यताम् ॥ ७२ ॥

लिपीन् परीक्ष्य सर्वेषां संवादं विनयन्धरे । समवेत्येति चित्ते ते दध्युरक्षामबुद्धयः ॥ ७३ ॥

दुग्धे पूतरका न स्युरस्मिन् दोषास्तथा ध्रुवम् । प्रत्यक्षं लक्ष्यते चैतत् तत्किञ्चिद् भावि कारणम् ॥ ७४ ॥

ऊचुस्ते नृपते ! हारहूरारामे रमेत यः । नासौ करी करीरेषु कुरुते कर्हिचिद् रतिम् ॥ ७५ ॥

तथा च—निमेषमपि योऽनेन समं गोष्ठीपरो भवेत् । वञ्जुलेनेव विषभृद् विषमंहः स मुञ्चति ॥ ७६ ॥
विभावयन्तु तच्चित्ते तत्त्वेनैतत् सभासदः । केनापि पिशुनेनैतद् दुर्घटं घटितं ननु ॥ ७७ ॥
भवेद् विषभृतोऽप्येष खलोऽतिविषमः खलु । यत्फणी नकुलद्वेषी स्वकुलद्वेषभाक् खलः ॥ ७८ ॥
इति पौरवचांस्युच्चैर्निरंकुश इव द्विपः । नृपोऽवज्ञाय स न्यायाविमुखोऽथाभवत् तदा ॥ ७९ ॥
क्रोधोत्कटो भटान् प्रेष्याबन्धयद् विनयन्धरम् । महीभुग् मुक्तमर्यादस्ततसवस्वमलुण्टयत् ॥ ८० ॥
स्वस्यावरोधे तास्तस्यानाययत् स वधूः कुधीः । विरुद्धपक्षपा यूयमिति पौरानभर्त्सयत् ॥ ८१ ॥
भूपो रूपं निरीक्ष्यासामथ श्लथनयो भृशम् । दध्यौ न सुरवध्वोऽपि भवन्त्येवंविधा दिवि ॥ ८२ ॥
तद्धन्योऽस्म्येष मान्योऽस्मि यस्यैता दयिता गृहे। स्वयं स्निह्यन्त्यमूश्चेत् तत्सौभाग्योपरि मञ्जरी ॥ ८३ ॥
यद्वा किं चिन्तया सर्वं क्रमात् सेत्स्यत्यभीप्सितम्। उदुम्बरफलं सद्यः पच्यते क्षुधितस्य किम् ? ॥ ८४ ॥
ध्यात्वेति तासां शयनासनभूषाद्यदापयत्। भूपतिस्ताश्च विषवत् तदवाज्ञासिषुर्भृशम् ॥ ८५ ॥
प्रैषीद् भूपोऽन्यदा चेटीस्ताः प्राहुर्विनयानताः। स्वामिन्यो मुञ्चतोद्वेगं फलितं सुकृतं हि वः ॥ ८६ ॥
यदेषोऽस्मत्प्रभुर्युष्मास्वानुकूल्यं दधात्यलम्। रुष्टः कीनाशसङ्काशस्तुष्टो यः स्वस्तरूपमः ॥ ८७ ॥
तद् विषादनिषादं द्रागपहाय स्वमानसे। भुज्यन्तां भूभुजा साकं भोगा ये दुर्लभा भवे ॥ ८८ ॥

ऊचुस्ताः शीललीलाभिः प्रशस्ताश्चेटिकाः प्रति । मुहुर्मावादिषुरिदं हलाः ! कोलाहलाकुलाः ॥ ८९ ॥
रुष्टोऽयं दुष्टभूपश्चेत् प्राणान्तं नः करिष्यति । तत् साध्वखण्डशीलानां श्रेयान् मृत्युरपीह यत् ॥ ९० ॥
वरं प्रविष्टं ज्वलने न पुनः खण्डितं व्रतम् । वरं हि मृत्युर्न पुनः शीलभ्रष्टस्य जीवितम् ॥ ९१ ॥
ताभिरित्यद्भुतैर्वाक्यैर्भृशं निर्भर्त्सितास्तु ताः । चेट्यो व्यजिज्ञपन् सर्वं भूमिभर्त्रे तदादितः ॥ ९२ ॥
भूपस्तन्निश्चयं ज्ञात्वा तथापि स्वेष्टसिद्धये । चिन्ताचान्ततरस्वान्तस्तदुपान्तमथागमत् ॥ ९३ ॥
ताभिर्दृष्ट्यापि न स्पृष्टः स दुष्टोऽनिष्टनिष्ठुरः । तथापि नामुचत् पार्श्वं धिगहो ! मोहजृम्भितम् ॥ ९४ ॥
अन्यदा नृपतिस्तासां यावद् रूपं निरीक्षते । तावत् ता अनलज्वालापिशङ्गाङ्गशिरोरुहाः ॥ ९५ ॥
वक्रदन्तोष्ठनासाश्च सर्वाङ्गेष्वतिगर्हिताः । सोद्वेगं वीक्ष्य भूपालोऽचिन्तयच्चेति चेतसि ॥ ९६ ॥ (युग्मम्.)
दृग्बन्धः किमयं किं वा भवेद् विलसितं विधेः ? । किं वा पापप्रयोगोऽयं कोऽप्यकस्माद् विजृम्भते ॥ ९७ ॥
अथ विज्ञाततद्वृत्ता देव्यागात् तत्र भूपतेः । कृतकोपा च सा सोपालम्भं भूवल्लभं जगौ ॥ ९८ ॥
धिक् त्वां नृपसुतां हित्वा परस्त्रीसङ्गमिच्छसि । स्वायत्तासु विरक्तस्त्वं परायत्तासु रज्यसि ॥ ९९ ॥
यतः—रज्येन्नीचः परस्त्रीषु स्वायत्तायां स्त्रियामपि । परिपूर्णेऽपि सरसि पिबेत् काको घटोदकम् ॥ १०० ॥
ततो लज्जावनम्राङ्गो दातुं प्रतिवचोऽक्षमः । क्ष्मापो व्यसीसृजत् ताश्च सधनं विनयन्धरम् ॥ १०१ ॥

पुनः सहजरूपास्तास्तथैवासन् गृहं गताः । तत्कारणं विजिज्ञासुर्भूपो ज्ञानिनमैहत ॥ १०२ ॥
आयासीदन्यदोद्याने चतुर्ज्ञानधरो गुरुः । तं वन्दितुं चचालाथाचलानाथः सनागरः ॥ १०३ ॥
श्रुत्वा तद्देशनां भूपोऽभ्यधात् किं प्राग्भवे विभो ! । विनयन्धरजीवेन कृतं सुकृतमुत्तमम् ॥ १०४ ॥
यदीदृक्षाः सुरवधूसदृक्षास्तस्य वल्लभाः । अभूवंश्च कुतो हेतोर्विरूपास्तास्तदा विभो ! ॥ १०५ ॥
सूरिराख्यद् गजपुरे विचारधवलो नृपः । दयौदार्यादिगुणवान् वन्दी तस्यास्ति कश्चन ॥ १०६ ॥
दत्त्वा पात्राय कस्मैचिन्मनोज्ञमशनादिकम् । भोक्ष्येऽवश्यं स नियममित्यादत्त मुनेर्गिरा ॥ १०७ ॥
विन्दूद्यानेऽन्यदा वन्दी निरीक्ष्य नवमं जिनम् । नत्वा स्तुत्वा गृहं गत्वा दत्त्वा पात्राय भुक्तवान् ॥ १०८ ॥
अन्यदा भाग्ययोगेन तद्गेहे सुविधिर्जिनः । आगात् प्रासुकभक्तेन स प्रभुं प्रत्यलाभयत् ॥ १०९ ॥
अभूवन् पञ्च दिव्यानि तदा दानानुभावतः । वन्दिनस्तस्य वन्दित्वं प्राप्ताः सुरनरा अपि ॥ ११० ॥
बोधिं लब्ध्वाऽथ सौधर्मेऽसौ धर्मेण सुरोऽजनि । ततश्च्युत्वा पुरेऽत्राभून्महेभ्यो विनयन्धरः ॥ १११ ॥
इत्यस्य फलितो राजन्! दानधर्मसुरद्रुमः । आसीत् तत् तत्र भो भव्याः! प्रयत्नं कुरुतादृताः ॥ ११२ ॥
इत्थमस्य महेभ्यस्य कथितः प्राग्भवो मया । अथाकर्णय भूपैतद्दयितानां चतसृणाम् ॥ ११३ ॥
अस्त्यत्रैव परायोध्याऽयोध्या नाम महापुरी । तां प्रशास्ति प्रयत्नेन नृपतिर्नरकेशरी ॥ ११४ ॥

तस्यावरोधमुख्याऽभूद् राज्ञी कमलसुन्दरी। तयोः सुशीला सकला सुताऽऽसीद् रतिसुन्दरी ॥ ११५ ॥
श्रीदत्तमन्त्रिणस्तत्र पुन्यभूद् बुद्धिसुन्दरी। सुमित्रश्रेष्ठिनश्चापि सुता जातर्द्धिसुन्दरी ॥ ११६ ॥
पुरोधसः सुघोषस्य पुत्री च गुणसुन्दरी। एताश्चतस्रोऽपि मिथः सख्यः सवयसोऽपि च ॥ ११७ ॥
आसते शेरते चापि भुञ्जते विचरन्त्यपि। सहैव क्षणमप्यासां यदासीन्न वियुक्तता ॥ ११८ ॥
सुमित्रश्रेष्ठिनो गेहे निषेदुष्योऽन्यदाऽथ ताः। तत्रागतां मुदाऽपश्यन् साध्वीं नाम्ना गुणश्रियम् ॥ ११९ ॥
रतिसुन्दर्यथावोचत् सख्यः! कैषा सिताम्बरा?। मूर्त्ता ब्राह्मीव या नेत्रानन्दं सृजति वीक्षिता ॥ १२० ॥
श्रेष्ठिपुत्री जगावस्मत्पित्रोः पूज्या तपोनिधिः। भारतीव श्रुतापूर्णाऽसौ शमश्रीरिवाङ्गिनी ॥ १२१ ॥
तथा च—धन्या एतां नमस्यन्ति धन्या एतामुपासते। धन्या एतद्गिरं नित्यं शृण्वन्ति विहितोद्यमाः ॥ १२२ ॥
कुमार्यस्तास्ततः पुण्यप्रशस्तास्तां ववन्दिरे। आचख्यौ सा पुरस्तासामर्हद्धर्मं सविस्तरम् ॥ १२३ ॥
ताः सर्वा अपि मिथ्यात्वक्षयोपशमतस्तदा। सम्यक्त्वमूलं गृहिणां धर्मं संप्रत्यपीपदन् ॥ १२४ ॥
परपुंसङ्गनियमं विशेषात् ता अदीदृढन्। कुलस्त्रीणां यतः शीलमेवान्तरविभूषणम् ॥ १२५ ॥
भवे भवेऽपि सुलभा भूर्भुवःस्वस्त्रयीनरः। पुनः पुनः सुदुष्प्रापा शीललक्ष्मीरियं परम् ॥ १२६ ॥
एवमस्खलितं धर्मं ताश्चतस्रोऽप्यपालयन्। कियन्तं सुखसंयुक्तं समयं चात्यवाहयन् ॥ १२७ ॥

अन्यदा रतिसुन्दर्या रूपातिशयमद्भुतम् । श्रुत्वा तत्प्रार्थनायाथ चन्द्रराट् प्राहिणोच्चरम् ॥ १२८ ॥
स पित्रानुमतां तां च चन्द्रभूपः स्वयंवराम् । महामहेनोदवाक्षीद् दयितां रतिसुन्दरीम् ॥ १२९ ॥
दृष्ट्वा पौरस्त्रियस्तां चावदन् विस्मितमानसाः। किं रतिर्वा शची वेयं किं वा गौर्यथवेन्दिरा? ॥ १३० ॥
वर्त्तमाना प्रवृत्तिः सा नानाराष्ट्रेषु चान्यदा । शुश्रुवे कुरुदेशेशमहेन्द्रसिंहभूभुजा ॥ १३१ ॥
रतिसुन्दर्यर्थनाय स दूतं प्राहिणोन्नृपः । चन्द्रराज्ञे च सोऽप्येत्य जगाद नृपतेः पुरः ॥ १३२ ॥
चन्द्र ! त्वामादिशत्यस्मत्प्रभुरित्थं यदावयोः । पुरापि हार्दं सौहार्दं वर्त्ततेऽत्र किमुच्यते ? ॥ १३३ ॥
यत्किञ्चित् तव दुःसाध्यं भवेत् कार्यं तदुच्यताम् । देहेनैवान्तरं यस्मादावयोः प्रेमभाजिनोः ॥ १३४ ॥
अन्यच्च या नवोढाऽसौ तवास्ति रतिसुन्दरी। सा नः प्रेष्या हि यत् प्रेमस्थानेऽदेयं न किञ्चन॥ १३५ ॥
तदुक्तमिति चाकर्ण्य स्मित्वा चन्द्रनृपोऽप्यवक् । इति दूत ! त्वया वाच्यं वाक्यं स्वस्वामिनः पुरः ॥ १३६ ॥
यत्किञ्चिदन्यत् ते कृत्यं तदाज्ञापय मे द्रुतम् । प्राणान्तेऽपि कुलीनानां न युक्तं स्त्रीसमर्पणम् ॥ १३७ ॥
दूतोऽथाख्यद् भृशं देवीदर्शनोत्कण्ठितो नृपः । तदुक्तमन्यथा कर्त्तुं तत्ते राजन् ! न युज्यते ॥ १३८ ॥
ततस्तव हितं वच्मि स्वाम्यादेशं कुरुष्व तम् । प्रसह्य तस्य तां सद्यो गृह्णतः को निषेधकः ? ॥ १३९ ॥
श्रुत्वेति चन्द्रभूमीन्द्रोऽभणद् भ्रूभङ्गभीषणः । न युज्यतेऽभिजातानामपरप्रेयसीरतिः ॥ १४० ॥

कोऽयं तस्य कुलाचारः का मेरा किञ्च जीवितम् ? । किं राज्यं का त्रपा को वा नयो दुर्नयकांक्षिणः ? ॥ १४१ ॥
यद्वा सविद्या तारुण्ये यदाचीर्णं रहो मदात् । व्यज्यते तत्सुतैरीदृगाचारैर्मातृचेष्टितम् ॥ १४२ ॥
तन्नूनं घटते नैवं किं दद्यात् कोऽपि वल्लभाम् ? । जीवतामहिसिंहानां किं ग्राह्या मणिकेसराः ? ॥ १४३ ॥
निर्भर्त्स्यैवं नृपो दूतं स्वभटैर्निरवासयत् । गत्वाऽऽख्यत् स महेन्द्रस्य क्रुद्धस्तं सोऽभ्यषेणयत् ॥ १४४ ॥
उभयोर्दलयोर्युद्धे जायमाने महोत्कटे । दैवयोगान्महेन्द्रेण बद्धश्चन्द्रमहीपतिः ॥ १४५ ॥
नश्यत्यनीके चन्द्रस्य गृहीत्वा रतिसुन्दरीम् । विमुच्य चन्द्रभूपं च महेन्द्रः स्वपुरीमगात् ॥ १४६ ॥
अभ्यधादिति भूपस्तां श्रुतायामपि यत् त्वयि । प्रेम मेऽभूत् ततो ह्येष संरम्भस्त्वत्कृते कृतः ॥ १४७ ॥
प्रिये ! प्रयाससाफल्यं कुरु तत् प्रतिपद्य माम् । श्रुत्वेति दध्यौ सा धिग् मे रूपमप्यसुखौघकृत् ॥ १४८ ॥
हा ! मदर्थमनेनार्यपुत्रः प्राणितसंशयम् । प्रापितो यत् कुशीलत्वं व्यनक्त्येष पुरो मम ॥ १४९ ॥
तदस्मात् पापचरिताच्छीलं रक्ष्यं मया कथम् ? । अशुभे कालहरणं कार्यं यत् सुधियाऽथवा ॥ १५० ॥
विभाव्येत्यवदत् साम्ना सुन्दरी सा भुवो धवम् । व्रतं मेऽस्ति चतुर्मास्याः न कुर्वे शीलखण्डनम् ॥ १५१ ॥
ओमिति प्रतिपन्नेऽस्मिन् मनाग् निर्वृतमानसा । स्नानाङ्गरागभूषाद्यमकुर्वन्ती तपःपरा ॥ १५२ ॥
क्रमेण क्षीणदेहाऽभूद् दवदग्धेव पद्मिनी । मलक्लिन्नवपुर्वस्त्रा भूभुजाऽन्येद्युरीक्षिता ॥ १५३ ॥ (युग्मम्).

उक्ता च भद्रे! कस्मात् त्वमापन्नाऽसीदृशीं दशाम्। साऽवोचत् प्रतिपन्नं यन्मया घोरमिदं व्रतम् ॥ १५४ ॥
तेन क्षामाऽस्मि च तथाप्येतत् पाल्य मया ध्रुवम्। व्रतभङ्गोऽतिदुःखाय यतो जन्मनि जन्मनि ॥ १५५ ॥ (युग्मम्).
भूपोऽजल्पत् कुतो भद्रे! तव वैराग्यमद्भुतम्?। साऽऽख्यन्मे वपुरेवैतद् राजन्! वैराग्यकारणम् ॥ १५६ ॥
सुधीः कोऽमेध्यपूर्णेऽस्मिन् कृमिजालशताकुले। रज्येत् कलेवरे विस्रदुर्गन्धरसभाजने? ॥ १५७ ॥
निशम्यैवमपि क्ष्मापः पुनः पूर्णे व्रतावधौ। तथैवाभिलषन् भोगांस्तयेति प्रत्यबोधि सः ॥ १५८ ॥
यदि नामास्य कायस्य यदन्तस्तद् बहिर्भवेत्। गृध्रादिभ्यस्ततः कामी धृत्वा दण्डमवत्यमुम् ॥ १५९ ॥
तथा च—मलमूत्रादिपात्रेषु गात्रेषु मृगचक्षुषाम्। रतिं करोति को नाम सुधीर्वर्चोगृहेष्विव? ॥ १६० ॥
अन्यच्च—भूरिरन्ध्रस्रवद्विस्ररसेऽशुचिनिकेतने। राजन्! रागकरं किं ते देहेऽस्मिन्नस्ति कथ्यताम्? ॥ १६१ ॥
नृपोऽवक् तव सौन्दर्यं किं ब्रूमो येन तेऽक्षिणी। मनो मे हरतो मूल्ये ययोर्न स्याद् रसाऽप्यसौ ॥ १६२ ॥
रतिसुन्दर्यथो ज्ञात्वा नृपरागमगत्वरम्। परोपायमपश्यन्ती शीलरक्षाविधौ सुधीः ॥ १६३ ॥
केनाप्यस्त्रेण नेत्रे स्वे उत्खाय कृतसाहसा। सहसा सा रसाभर्त्तुः पाणौ प्रादान्महासती ॥ १६४ ॥ (युग्मम्).
ऊचे साऽऽदत्स्व नेत्रे द्वे राजन्! निजमनोहरे। कृतमन्याङ्गसङ्गेनातः परं श्वभ्रहेतुना ॥ १६५ ॥
भूपोऽपि तत् तथा दृष्ट्वा विषादादिदमभ्यधात्। हा! धिक् किं दारुणं कर्म सहसा निर्मितं त्वया? ॥ १६६ ॥

साऽऽख्यत् स्याद् येन मालिन्यं कुलस्याप्ययशो भुवि । दुर्गतिः प्राप्यते चान्ते ततो हि मरणं वरम् ॥ १६७ ॥
यतः—शीले जीवति जीवन्ति कुलं लोकद्वयं यशः । शीलरक्षा कुलस्त्रीणां प्राणत्यागेऽप्यतो मता ॥ १६८ ॥
राजन् ! तवाप्यन्यकान्तासक्तस्यात्र परत्र च । न धर्मो न सुखं चास्ति मनसीत्यवधारयेः ॥ १६९ ॥
युक्तियुक्तामिति श्रुत्वा तदुक्तमवनीपतिः । प्राप्तप्रबोधः प्रमदात् प्रमदां तामदोऽवदत् ॥ १७० ॥
बोधितः सुष्ठु भद्रेऽहमंहसोऽस्मान्निवर्त्तितः । अतः परं ममाप्यस्तु परस्त्रीविरतिव्रतम् ॥ १७१ ॥
हा ! मया ते महासत्याः कृताऽनर्थपरम्परा । तत् सहस्वापराधं मे कृपावति ! महासति ! ॥ १७२ ॥
कायोत्सर्गे स्थिता साऽथ स्मृत्वा शासनदेवताम् । पुनः प्रगुणनेत्राऽऽसीत् सुशीला रतिसुन्दरी ॥ १७३ ॥
तद्दर्शनेन तुष्टात्मा नृपोऽप्याप्तनरैर्द्रुतम् । सत्कृत्य वस्त्रभूषाद्यैः प्रापयत् तां निजां पुरम् ॥ १७४ ॥
महेन्द्राद् ज्ञातवृत्तेन चन्द्रेणाखण्डितव्रता । रतिसुन्दर्यथानिन्ये बहुमानेन सद्मनि ॥ १७५ ॥
इति प्रवर्त्तिनीदत्तं व्रतं सा रतिसुन्दरी । यावज्जीवं त्रिधा शुद्ध्या पालयामास निर्मलम् ॥ १७६ ॥

### इति रतिसुन्दरीचरितं समाप्तम् ।

बुद्धिसुन्दर्यथो पित्रा सुसीमनगरेशितुः । जितशत्रोः सुकीर्त्याख्यमन्त्रिणेऽदायि सद्व्रता ॥ १७७ ॥
वीक्ष्यान्यदा गवाक्षस्थां भूपस्तद्रूपमोहितः । छलमुत्पाद्य सचिवं बद्ध्वा तां स्वगृहेऽनयत् ॥ १७८ ॥

यतः—न पश्यति दिवोलूको द्विको निशि न पश्यति। कामान्धः कोऽपि पापीयान् दिवा नक्तं न पश्यति ॥ १७९ ॥
अथ पौरोपरोधेन विमोच्य सचिवं नृपः। बुद्धिसुन्दर्युपान्तेऽगान्निजाभिमतसिद्धये ॥ १८० ॥
अचाल्यसत्त्वाप्यस्वप्नैस्तत्त्वार्थं किमपि स्फुटम्। विमृश्यासौ विशामीशमाचख्यौ मधुरोक्तिभिः ॥ १८१ ॥
भूनेतः! कथमेतत् ते चेतः केतुचलाचलम्। कथं परवशायां ते मतिः परवशाऽधुना ? ॥ १८२ ॥
रागसागरमग्नस्त्वं भोक्ष्यसे दुःखमुल्बणम्। तिलमात्रमिदं शर्म दुःखं मेरूपमं पुनः ॥ १८३ ॥
वरमालिङ्गिता क्रुद्धा चलल्लोलात्र सर्पिणी। न पुनः कामुकेनापि नारी नरकपद्धतिः ॥ १८४ ॥
मनो निर्माय निर्मायमयि! कुग्रहविग्रहम्। तदमुं मुञ्च सिञ्च स्वं सन्तोषसुधयाधिकम् ॥ १८५ ॥
यद्वा तव हृदीच्छेयं कथञ्चिन्न निवर्त्तते। तिष्ठ तन्नियमं यावद् यद् व्रतं मेऽस्ति किञ्चन ॥ १८६ ॥
प्रतिपन्ने नृपेणेति सा व्यधात् प्रतिमां निजाम्। मदनेनान्तः शुषिरां मध्येऽमेध्येन संभृताम् ॥ १८७ ॥
विलिप्य चन्दनैस्तां च विभूष्य वरभूषणैः। दर्शयित्वा नृपस्याख्यत् किं स्यामीदृश्यहं न वा ? ॥ १८८ ॥
आख्यद् भूपोऽप्यहो! शिल्पे कौशलं ते किमुच्यते ?। यस्य त्वं दयिता सोऽमूं वीक्ष्य यद् रतिमाप्नुयात् ॥ १८९ ॥
एवं नृपोक्ते साऽजल्पद् यद्येवं तत् स्वसन्निधौ। धृत्वाऽमूं मुञ्च मां सद्यो मा कुलं स्वं कलङ्कय ॥ १९० ॥
श्रुत्वेति मन्युनाक्रान्तो भूकान्तस्तां बभञ्ज सः। पद्भ्यां हत्वा तदन्तःस्थो दुर्गन्धश्चाप्युदच्छलत् ॥ १९१ ॥

तां दृष्ट्वा तत्र केऽप्यागुर्वीक्ष्य तन्मिथुनं च ते । गत्वा स्वस्वामिनेऽशंसन् यानमारोहयत् स तौ ॥ २०४ ॥
सुलोचनाह्वः पोतेशः प्रेक्ष्य तामृद्धिसुन्दरीम् । विषमैर्विशिखैरेष विषमेषोरविध्यत ॥ २०५ ॥
दध्यौ चायं किं जीवितेन किं यौवनेन चानेन । यदि मां स्वयमाश्लिष्यत्येषा नोत्कण्ठिता कण्ठे ॥ २०६ ॥
यद्वा जीवति पत्यौ नैषा मत्काङ्क्षिणी कथमपि स्यात् । ध्यात्वेति निशीथेऽसौ धर्मं चिक्षेप वारिनिधौ ॥२०७॥
प्रातः प्रियमपश्यन्तीं रुदन्तीमृद्धिसुन्दरीम् । सुलोचनोऽथ मधुरैर्वचोभिस्तामबूबुधत् ॥ २०८ ॥
रोदनेन कृतं भद्रे! त्वत्पतिः स गतो यदि । तद् गच्छतु स निःस्नेहो भविष्याम्येष ते प्रियः ॥ २०९ ॥
तत् स्वस्था भव मा शोचीः सर्वमेतद् वशे तव । एष भृत्योऽपि भूत्वा ते करिष्ये सर्वमीप्सितम् ॥ २१० ॥
तदुक्तमिति साऽऽकर्ण्य कर्णे क्रकचकर्कशम् । कृतावहित्था विज्ञाततच्चरित्राप्यचिन्तयत् ॥ २११ ॥
धिग् मे रूपमनर्थस्य हेत्वेतद् यत्कृतेऽमुना । इदमाचरितं यद्वा कामिभिः क्रियते न किम्? ॥ २१२ ॥
पतिं विना तदद्याहं निपतामि पयोनिधौ । परमर्हन्मते बालमरणं प्रत्यषिध्यत ॥ २१३ ॥
जीवन्ती सुकृतं कुर्वे दुर्लभो नृभवो भवे । अस्मादखण्डशीला च प्राप्नोमि जलधेस्तटम् ॥ २१४ ॥
शीलरक्षाकृते तावत् कुर्वे कालविलम्बनम् । यदाशापाशबद्धोऽतिक्रमेद् वर्षशतान्यपि ॥ २१५ ॥
सुलोचनमवोचत् सा काऽधुनाऽसौ गतिर्मम? । तत् तीर्त्वा वारिधिं पश्चात् करिष्यामो यथोचितम् ॥२१६॥

आशाबन्धं विधायेति सोऽपि तत् प्रतिपन्नवान्। तत् पुस्फोटाथ बोहित्थं झटित्येवामभाण्डवत् ॥ २१७ ॥
पुण्येन फलकं प्राप्य प्राप्ता पारं च साऽम्बुधेः। प्राग्भग्नयानफलकेनापद्धर्मोऽपि तत् तटम् ॥ २१८ ॥
मिलितौ दैवयोगेनं तत्र तौ प्रेमपेशलौ। मिथोऽनुभूतं चरितं स्वं स्वं प्राहतुरञ्जसा ॥ २१९ ॥
ग्रामेशः कोऽपि तौ तत्र स्थितौ वीक्ष्य कृतादरः। गृहे नीत्वा कृतातिथ्यधर्मो हर्षादतिष्ठिपत् ॥ २२० ॥
सुलोचनोऽपि फलकं प्राप्य तीरे पयोनिधेः। पल्ल्यां कापि झषाहाराज्जातकुष्ठामयोऽभवत् ॥ २२१ ॥
भ्रमन् स ऋद्धिसुन्दर्या वीक्ष्य पत्युः प्रदर्शितः। दयालुत्वेनौषधाद्यैर्धर्मस्तं नीरुजं व्यधात् ॥ २२२ ॥
यतः—उपकारिषूपकारं कुर्वन्ति प्राकृता अपि प्रायः। अपकारिष्वपि ये चोपकारिणस्ते जगति विरलाः ॥ २२३ ॥
सुलोचनस्तत् सौजन्यं मत्वाऽनन्यसमं पुनः। निजदुश्चेष्टितेनाथ व्रीडयाऽभूदधोमुखः ॥ २२४ ॥
तमपृच्छदथो धर्मो वैमनस्यस्य कारणम्। सोऽप्याख्यद् दुश्चरितं मे हृदि खाट्कुरुते भृशम् ॥ २२५ ॥
त्वमप्यज्ञानमूढेन येन क्षिप्तोऽसि वारिधौ। सतीयं मन्मथान्धेन मयाऽभिलषितास्ति यत् ॥ २२६ ॥
लेभे तत्फलमत्रैवेत्युक्तिभाग् बोधितोऽथ सः। परस्त्रीविरतो धर्मे धर्मेणैव महात्मना ॥ २२७ ॥
साध्वीदत्तं व्रतं यावज्जीवं साऽपालयत् सती। इहामुत्रापि शर्माणि लेभेऽसावृद्धिसुन्दरी ॥ २२८ ॥

इति ऋद्धिसुन्दरीचरितं समाप्तम्।

अथ गुणसुन्दर्यपि यौवनमारूढा निरीक्षितान्येद्युः । इह वेदशर्मवाडवसुतेन सा वेदरुचिनाम्ना ॥ २२९ ॥
दध्यौ स च धन्योऽहं यस्यैषा दृष्टिगोचरं प्राप्ता। गृह्णामि पाणिमस्याः कथमपि तज्जन्म मे सफलम् ॥ २३० ॥
चिन्ताचान्तस्वान्तः पृष्टः पित्रा यथास्थितमवोचत्। वेदरुचिः स्वरुचिमसौ जनकोऽप्यथ तत्कृते ताम्यन् ॥२३१॥
गुणसुन्दरीं सुतां प्रार्थयत् सुघोषं पुरोधसं सोऽपि। श्रावस्त्यां दत्ताऽसौ पुरोधसे नन्दनाख्याय ॥ २३२ ॥
प्रत्युत्तरमित्यगदत् तथापि न जहाति वेदरुचिरेषः। गुणसुन्दर्यां रागं सृजेत् तदर्थं बहूपायान् ॥ २३३ ॥
परमूषरवर्षणमिव तदशेषमभूद् निरर्थकं तस्य । श्रावस्त्या एत्य पुरोधसः सुतस्तामथोद्वाक्षीत् ॥ २३४ ॥
श्रावस्त्यां प्राप्तोऽसावादाय वधूं तथापि वेदरुचिः । नैवोत्सृजंस्तदाशां जगाम गिरिदुर्गगां पल्लीम् ॥ २३५ ॥
पल्लीशमुपास्य चिरं स तत्र संप्रार्थयत् स्वकार्याय । वेदरुचिः श्रावस्त्यां पुरि तमवस्कन्दसंपातम् ॥ २३६ ॥
प्रक्षिप्य भिल्लधाटीं पल्लीशोऽलुण्टयत् स तां नगरीम्। वेदरुचिर्विलपन्तीमादाद् गुणसुन्दरीं मुदितः ॥ २३७ ॥
आनाय्य तां स पल्लीमवदत् सुन्दरि! हृतं त्वया यन्मे। चित्तं तदा तदर्पय यत् तेन विनास्मि शून्य इव ॥ २३८ ॥
तथा च—निवससि हृदये स्वप्नेषु दृश्यसे दिङ्मुखेषु घोलयसि। स्फुरसि सदा रसनायां यद्यपि दूरीकृता विधिना ॥ २३९ ॥
तस्मिन्नित्युक्तिपरेऽजल्पद् गुणसुन्दरी वितर्कपरा । नो लक्षयाम्यहं त्वां कदा कथं त्वन्मनश्च हृतम् ॥ २४० ॥
वटुराख्यत् स्वानुभवं दध्यौ श्रुत्वेति सुन्दरी चित्ते । ही ! रागान्धेनाहं कानीता दुष्टशबरेषु ? ॥ २४१ ॥

यद्वा—अपि चलति सुमेरुरसावुदयति सवितापि चेत् प्रतीच्यां च। नतु जीवन्ती जात्वपि कुलं च शीलं मलिनयामि ॥२४२॥
तत् कथमपि बोध्योऽयं सुरक्षणीयं च निर्मलं शीलम्। मायापि यदत्रार्थे शुभायतिर्भवति नियमेन ॥ २४३ ॥
ध्यात्वेत्यसाववादीदेवं चेत् कार्यकृद् भवानासीत्। किं नोक्तं प्राक् यत् त्वयि पत्यौ किं दूरगमनेन ? ॥ २४४ ॥
एवं कृतेऽभविष्यन्नहि नौ कुलशीलयोरपि कलङ्कः। यस्मात् कुमारतायां स्याद् यूनोः सर्वमविरुद्धम् ॥ २४५ ॥
संप्रति च समायोगे लोके गर्हा कुलस्य मालिन्यम्। दुर्गतिगमनं दारुणदुःखकरं चापि परलोके ॥ २४६ ॥
तत् परिभावय सम्यक् संप्रति समयोचितं महासत्त्व!। येनायतौ हितं स्यात् तदेव कुर्वन्ति कृतिनोऽमी ॥ २४७ ॥
इति विविधवचनरचनारञ्जितचित्तेन चिन्तितं वटुना। सत्यं प्रगुणोपायः कार्यस्य मया न तु ज्ञातः ॥ २४८ ॥
परमेतदर्थमेवैतावान् क्लेशः कृतः कथममूं तत्। मुञ्चामीति विचिन्त्यावोचद् यद् वदसि तत् सत्यम् ॥ २४९ ॥
परमेष निमेषमपि त्वद्विरहे स्थातुमक्षमो भद्रे !। यदियत्समयं त्वत्सङ्गमाशयासूनपि दधेऽहम् ॥ २५० ॥
तद् भवतु यदिह भाव्यं परमङ्गमनङ्गतापतप्तं मे। निजतनुशीतलशीकरसङ्गाद् निर्वापयेदानीम् ॥ २५१ ॥
ध्यात्वेति निश्चयं तस्य सुन्दरी सादरा बहिर्वृत्त्या। स्माह यदिदं तवेष्टं तत् संपाद्यं मया सर्वम् ॥ २५२ ॥
किन्तु मयास्त्यारब्धः साधयितुं दुर्लभो महामन्त्रः। प्रतिपन्नं च तदर्थं मासान् ब्रह्मव्रतं चतुरः ॥ २५३ ॥
समतीतं मासयुगं शेषं तिष्ठति ततस्तवैवेष्टम्। तत्साधनानुभावात् पुत्राः श्रीः स्यादवैधव्यम् ॥ २५४ ॥

एतन्ममैव गुणकृत् तुष्टेन स्वीकृतं ततस्तेन । सुन्दर्यपि गृहकृत्यं कुरुतेऽसौ कृत्रिमप्रणया ॥ २५५ ॥
स्नानाञ्जनादि मुक्त्वा च शोषयन्ती स्वदेहमपि तपसा। विरसैर्न्यूनैरशनैश्चाभूद् गुणसुन्दरी क्षीणा ॥ २५६ ॥
पूर्णप्राये नियमेऽन्येद्युर्निशि युगपदेव विलपन्ती।पृष्टाख्यच्छूलार्त्ति मणिमन्त्रादीन् व्यधात् सोऽपि ॥ २५७ ॥
कथमप्यशान्तशूला त्वद्गृहवासस्य साह नार्हास्मि। येनेदृग् मे दुःखं दारुणमाकस्मिकं पतितम् ॥ २५८ ॥
तीव्रा शिरोव्यथा मे ज्वलति वपुः सन्धयः स्फुटन्त्यखिलाः। इति दुःखदावदग्धा धर्त्तुमसूनापि न शक्नोमि ॥ २५९ ॥
यन्मत्कृते त्वमप्यायासं कृतवान् न कोऽपि सिद्धोऽर्थः । तन्मे व्यथयति चेतः परमधुना देहि काष्ठानि ॥ २६० ॥
इति बहुधा विलपन्तीं तां वीक्ष्यावक् स सूत्रकण्ठोऽपि । मा खिद्यस्व प्राणैरपि सह्यां त्वां विधास्येऽहम् ॥ २६१ ॥
कुरु भीरु ! गभीरमिदं चेतस्ते भृत्य एष निभृतोऽहम्। यद्वा ब्रवीषि तत् त्वां श्रावस्त्यां प्रापये स्वगृहम् ॥ २६२ ॥
सुन्दर्याख्यद् यत्तद्वादी कर्णेजपः कथं वार्यः ?। सोऽप्याख्यत् तव पत्युः पुरतः साक्षी भविष्यामि ॥ २६३ ॥
आरोप्य ततो याने श्रावस्तीं तां निनाय विप्रोऽसौ। गुणसुन्दरीं निरीक्ष्य प्रमुदितमनसोऽभवन् स्वजनाः ॥ २६४ ॥
गुणसुन्दर्याचख्यौ निजपत्युः पुण्यशर्मविप्रस्य । यद् बन्धुनामुनाहं विमोचिता दुष्टशबरेभ्यः ॥ २६५ ॥
वसनाशनादिना तं कृतोपकारमिति सच्चकारासौ । अपराध्यहमिति शङ्कितमना अभूत् सोऽथ गन्तुमनाः ॥ २६६ ॥
निर्गच्छन् निशि स पुनर्दष्टो दुष्टोरगेण पूच्चक्रे । भिषजा विषजामर्त्तिं हर्त्तुमुपाक्रमत विप्रोऽपि ॥ २६७ ॥

गुरुगरललहरिभिरसौ कण्ठगतासुर्भिषग्भिरपि मुक्तः। गुणसुन्दरी ततोऽवक् यदि शीलं जयति जगतीह ॥ २६८ ॥
यदि च त्रिधापि नाखण्डि तन्मया तद् भवत्वविष एषः। उक्त्वेति तं जलेनाभिषिच्य निर्गतविषं चक्रे ॥२६९॥ (युग्मम्).
दृष्ट्वा शीलातिशयं चमत्कृतास्तुष्टुवुः पुरीलोकाः। अवगततदुदन्तोऽथावदन्मुदा वेदरुचिरिति च ॥२७०॥
आसीः पुरा हि भगिनी जीवितदानाच्च साम्प्रतं जननी।पापमतिवारणाद् गुरुरपि त्वमेवासि मे साध्वि !॥२७१॥
ज्ञातं तव माहात्म्यं मया त्वया पापचेष्टितं च मम। तद् ब्रूहि किं प्रियं ते करोमि ही ! मन्दभाग्योऽहम् ॥ २७२ ॥
सोचे त्वमुपाकार्षीर्बन्धो ! विरतोऽसि चेत् परवधूभ्यः। यस्मात् तद्विरतानामिह शर्मशतानि चामुत्र ॥ २७३ ॥
स इति प्रतिपद्य स्वं क्षमयित्वागोऽप्यगाद् निजं स्थानम्। गुणसुन्दरी सलीलं शीलं परिपालयामास ॥ २७४ ॥

इति गुणसुन्दरीचरितं समाप्तम्।

इति रतिसुन्दर्याद्यास्तास्तु चतस्रोऽपि निजनिजं नियमम्। संपाल्य सत्त्ववत्यः समजायन्ताथ दिवि देव्यः ॥२७५॥
ततश्च्युत्वा चतस्रोऽपि यथात्रैवाप्यवातरन्। क्रमेण तास्तथोच्यन्ते श्रृणुत प्रथितादराः ॥ २७६ ॥
अत्रैव काञ्चनश्रेष्ठी वसुधारा च तत्प्रिया। तयोस्ताराभिधा पुत्री या पूर्वं रतिसुन्दरी ॥ २७७ ॥
कुबेराख्यो महेभ्योऽत्र तस्य पत्न्यस्ति पद्मिनी। श्रीनाम्न्यभूत् तयोः पुत्री या पूर्वं बुद्धिसुन्दरी ॥ २७८ ॥
तृतीयो धरणः श्रेष्ठी महालक्ष्मीश्च तत्प्रिया। विनयाख्या तयोः पुत्री याऽऽसीत् प्राग् ऋद्धिसुन्दरी॥ २७९ ॥

चतुर्थः पुण्यसारश्च पत्नी तस्य वसुन्धरा । देवी नाम्ना तयोः पुत्री या पूर्वं गुणसुन्दरी ॥ २८० ॥
उदवाक्षीचतस्रोऽपि ताः कन्या विनयन्धरः । पूर्वपुण्यानुभावेन भुञ्जते पञ्च ते सुखम् ॥ २८१ ॥
ततः पुण्यात्मनामेषां पञ्चानामपि भूपते ! । यो विघ्नं कुरुते धर्मे स एव निधनं व्रजेत् ॥ २८२ ॥
हुङ्कारेणैव चैतासां भस्मीभावं भजेद् नरः । परं न त्वदुपर्येता विरूपं विदधुर्मनः ॥ २८३ ॥
त्वयापि राजन् ! सुष्ठात्मा चेतितो यद् भवेद् नृणाम् । दुर्निवारान्यदाराभिषक्तानां दुःखसन्ततिः ॥२८४॥
कुरूपाः शीलरक्षायै व्यधाच्छासनसुर्यमूः । शुभोदर्काय वैरूप्यमपि यत् पापकर्मसु ॥ २८५ ॥
इति केवलिवचनामृतनिर्गतमिथ्यात्वगरलसंभारः । जीवितमिव जिनधर्मं बभार भूमीविभुरुदारः ॥२८६॥
जातसंवेगरङ्गो भूभुजङ्गोऽप्यन्यदा हि सः । सत्त्वादापन्नसत्त्वां स्वां राज्ञीं राज्येऽभिषिच्य च ॥ २८७ ॥
विनयन्धरमित्रेण सभार्येण समन्वितः । प्राव्राजीत् सद्गुरूपान्ते शान्तेन मनसा द्रुतम् ॥ २८८ ॥ (युग्मम्).
विजयन्त्यपि देवी सा राज्यं संपालयन्त्यथ । सुतां प्रसूता तच्चिन्ताग्रस्ता मन्त्र्यादयोऽभवन् ॥ २८९ ॥
सुतोऽभूदित्यथोद्घोष्य व्यधुस्तज्जननोत्सवम् । रहः संस्थाप्य पुंवेषा सुताऽसौ वर्द्धिता क्रमात् ॥२९०॥
क्रमेण यौवनं प्राप्ता देव्यादिष्टोऽथ मन्त्रिराट् । वरचिन्ताकृतेऽमुष्या यक्षमाराधयद् धिया ॥ २९१ ॥
प्रत्यक्षीभूय सोऽप्याख्यदुद्याने श्वस्तने दिने । समानेष्ये वरं पुत्र्याः पोतनेशसुतं द्रुतम् ॥ २९२ ॥

सत्यं स्वयंभूर्भूपोऽहं भुनज्मि नृपतिश्रियम् । भूत्वा समरसिंहस्त्वं माभूः समरजम्बुकः ॥ ३०६ ॥
इति दूतं विसृज्यासौ प्रयाणार्थमवादयत् । ढक्कां प्रतिनृपोऽप्यागात् रणः प्रावर्त्ततोल्बणः ॥ ३०७ ॥
अनुकम्पापरश्चम्पापतिस्तमिति चावदत् । निर्मन्तुजन्तुघातेन किमेतेन कृतेन भोः ! ॥ ३०८ ॥
तदावामेव युध्यावो ज्ञायते यद् बलाबलम् । प्रतिपन्ने च तेनापि समरोऽभूच्चिरं तयोः ॥ ३०९ ॥
परं समरसिंहस्तद्गदाघातनिपीडितः । पपात पृथ्व्यां मूर्च्छावान् अचेतन इवाभवत् ॥ ३१० ॥
अथ शीतोपचाराद्यैः कृत्वा तं प्राप्तचेतनम् । अङ्गराट् प्राह भोः ! ज्ञातं समरे तव दोर्बलम् ॥ ३११ ॥
तद् गृहाण प्रहरणं पुनः कुरु मया रणम् । श्रुत्वेति विस्मितः प्राह सोऽपि तं साहसोदधिम् ॥ ३१२ ॥
अहो ! शौर्यमहो ! धैर्यं तवैतज्जगदद्भुतम् । भग्नमानप्रतापस्य राज्येनापि कृतं तु मे ॥ ३१३ ॥
समं त्वमष्टकन्याभी राज्यमादत्स्व किंत्वहम् । परलोकहितं किञ्चित् करिष्ये त्वदनुज्ञया ॥ ३१४ ॥
इत्याग्रहपरः कन्याष्टकं राज्यं च तन्निजम् । दत्त्वा कमलसेनाय प्राव्राजीत् समरो नृपः ॥ ३१५ ॥
प्राप्तराज्यद्वयैश्वर्यो नवोढानवकश्रितः । प्राप्तश्चम्पां धृताकम्पां सोऽसृजद् रिपुसन्ततिम् ॥ ३१६ ॥
इतश्च पोतनपुराच्छत्रुञ्जयधराधवः । तत्र स्थितं सुतं राज्यभृतं मत्वा जनोक्तितः ॥ ३१७ ॥
सचिवान् प्रेषयामास तेऽप्यागत्यावदन्निति । स्वामिन् प्रवासतस्ते यद् दुःखं पित्रोरभूत् तदा ॥ ३१८ ॥

मिलन्निर्झरमालाभिर्वर्द्धमानां प्रतिक्षणम् । तटस्थविटपित्रातं पातयन्तीं गुरूर्मिभिः ॥ ३३२ ॥
नृपस्तामापगां वीक्ष्य तत्क्षणात् प्रकृतिस्थिताम् । पुनः पश्यन् प्रजानाथोऽचिन्तयच्चेति चेतसि ॥ ३३३ ॥ ( युग्मम् ).
अनर्थहेतुरेवायं पुंसां सर्वोऽपि विस्तरः । श्रियो नद्या इव प्रायः प्रसरत्यत्र जन्मनि ॥ ३३४ ॥
सरित्समो भवेज्जीवो जलपूरसमाः श्रियः । कृत्याकृत्यविवेकं यज्जन्तुर्वेत्ति न तद्वशः ॥ ३३५ ॥
तदलं तटिनीपूरतुलयया मे श्रियाऽनया । अभिमानसुखं यत्र भोगः साधारणः पुनः ॥ ३३६ ॥
धन्यास्ते यैरियं त्यक्ता संपच्छम्पाचलाचला । मक्षिका मधुनीवाहमासक्तोऽद्यापि तत्र हि ॥ ३३७ ॥
विभाव्येति सुसंवेगरससङ्गतमानसः । अभिषेच्य सुषेणाख्यं सुतं राज्ये स्वयं पुनः ॥ ३३८ ॥
गुणसेनादिशुद्धान्तयुतश्चादाय संयमम् । अभूत् कमलसेनर्षिर्ब्रह्मकल्पे सुरोत्तमः ॥ ३३९ ॥
गुणसेनापि तत्रैव देवत्वेनोदपद्यत । तयोः प्राग्जन्मसंस्कारात् तत्राभूत् प्रेम पेशलम् ॥ ३४० ॥

इति पं० श्रीसत्यराजगणिविरचिते श्रीपृथ्वीचन्द्रचरिते कमलसेनराजर्षिचरितं
द्वितीयं भवग्रहणम् ।

तत्रेति तारध्वनिनावनिनाथोऽप्यभाषत । भोः! भोः ! प्रेतपिशाचाद्या वचः शृणुत मेऽनघम् ॥ ११ ॥
महामांसं ददेऽहं वः पुत्रं ददतु मे सुराः । पिशाचः कोऽपि तच्छब्दं श्रुत्वागत्येदमब्रवीत् ॥ १२ ॥
भोः ! मांसेन कुतः पुत्रः प्राप्यते शिरसा यतः । नृपोऽवग् दद्मि तदपीत्युच्चरन् सहसाहसात् ॥ १३ ॥
विधृत्य पाणिना वेणीं कृपाणीं वाहयन् गले । पिशाचेनेति गदता धृतो भूमिविभुः करे ॥ १४ ॥ (युग्मम्).
त्वत्सत्त्वेनास्मि तुष्टोऽहं पुत्रस्ते भवितोत्तम ! । संशयं हृदि मा कार्षीरत्रार्थे प्रत्ययो ह्ययम् ॥ १५ ॥
देवी द्रक्ष्यति पारीन्द्रं स्वप्नेऽद्य शयिता निशि । श्रुत्वेति नृपतिस्तुष्टो निजमागाद् निकेतनम् ॥ १६ ॥
इतस्तस्यां निशि च्युत्वा ब्रह्मकल्पात् सुरोत्तमः । जीवः कमलसेनस्य कुक्षौ मुक्तावलीस्त्रियः ॥ १७ ॥
पुत्रत्वेनावतीर्णोऽयं सिंहस्वप्नोपसूचितः । बभार गर्भं देवी सा रोहणोर्वीव सन्मणिम् ॥ १८ ॥
सुतं प्रासूत पुण्येऽह्नि देवी मुक्तावली क्रमात् । अवर्षद् वसुधाराभिर्मेघस्तज्जन्महर्षतः ॥ १९ ॥
दत्तो देवेन नः सिंहस्वप्नसंसूचितो ह्ययम् । तं देवसिंहमित्याख्यत् पिता प्रमदपूर्णहृत् ॥ २० ॥
इतश्च गुणसेनाया जीवश्च्युत्वा ततो दिवः । पुर्युज्जयिन्यां विजयशत्रुनाम्नो महीपतेः ॥ २१ ॥
देव्याः कनकमञ्जर्याः कुक्षौ हंसीव मानसे । पुत्रीत्वेनावातरत् सा नाम्ना कनकसुन्दरी ॥ २२ ॥ (युग्मम्).
क्रमेण वर्द्धमानाऽसौ संप्राप्ता यौवनं वयः । परं विषयसौख्येषु विमुखा सा सुमुख्यभूत् ॥ २३ ॥

अथवेदृग्रूपशाली हला: ! कोऽप्यस्ति किं पुमान् ? । प्रतिरूपं हि यस्येदृगसरूपं जगत्यपि ॥ ३७ ॥
आख्यन् सख्यः स्वसर्देवसिंहोऽयं मेघभूपभूः । वरस्त्वदुचितः साधु विधिश्चेद् घटयिष्यति ॥ ३८ ॥
अत्रान्तरे प्रतीहार्या नृपस्तां चित्रपट्टिकाम् । आनाययत् सोऽप्यज्ञासीत् कुमार्या रुचितं वरम् ॥ ३९ ॥
ततो नृपः स्वसचिवान् मथुरां प्रेष्य सत्वरम् । देवसिंहकुमारायादापयत् तनयां निजाम् ॥ ४० ॥
मेघभूभृदनुज्ञातः सत्सामग्र्या समन्वितः । तत्पाणिग्रहणायागाद् देवसिंहो नृपाङ्गभूः ॥ ४१ ॥
महामहात् तामुद्वाह्य कन्यां कनकसुन्दरीम् । अतिष्ठद् देवसिंहोऽथ सुखं तत्र कियद्दिनान् ॥ ४२ ॥
तत्रान्यदा समायासीच्चतुर्ज्ञानी महामुनिः । श्रुत्वा तद्देशनां देवसिंहो धर्मं प्रपन्नवान् ॥ ४३ ॥
अन्यदा नृपमापृच्छ्य देवसिंहः प्रियान्वितः । मथुरामागतस्तत्र जातो वर्द्धापनोत्सवः ॥ ४४ ॥
अन्यदा मेघभूपोऽपि दत्त्वा राज्यं स्वसूनवे । निष्क्रम्य सद्गुरूपान्ते तपस्तप्त्वा दिवं ययौ ॥ ४५ ॥
इतरोऽपि नयेनोर्वीं पालयन् प्रथितो गुणैः । श्राद्धधर्मे सुनिष्णातोऽपालयद् द्वादशव्रतीम् ॥ ४६ ॥
कालेन शुक्रकल्पेऽभूद् विमलद्युतिनिर्जरः । साऽपि तत्रैव देवत्वमगात् कनकसुन्दरी ॥ ४७ ॥
एकत्रैव विमाने च तावुभौ प्रेमनिर्भरौ । पालयामासतुः सप्तदशोदधिमितां स्थितिम् ॥ ४८ ॥

इति पं० श्रीसत्यराजगणिविरचिते श्रीपृथ्वीचन्द्रचरिते देवसिंहराजश्रमणोपासकचरितं तृतीयं भवग्रहणम् ।

# चतुर्थो भवः ।

अत्रैव जम्बूद्वीपेऽथ प्राग्विदेहविभूषणे । सुकच्छविजये आग्रामही नाम नगर्यभूत् ॥ १ ॥
नृपो विमलकीर्त्याख्यस्तत्राभूद् विपुलः श्रिया । देवी प्रेमवती तस्य राज्ञः प्रियमतीत्यभूत् ॥२॥
देवसिंहसुरो देवरथस्वप्नोपसूचितः । आगात् तत्कुक्षिसरसि सुतत्वेन मरालवत् ॥ ३ ॥
स्वप्नानुसारतो देवरथ इत्यभिधां व्यधात् । पिता तस्य प्रमोदेन तारुण्यं प्राप स क्रमात् ॥ ४ ॥
इतश्चात्रैव विजये रतिरत्नाह्वये पुरे । रवितेजा नृपस्तस्य रतिदेवीति वल्लभा ॥ ५ ॥
कनकसुन्दरीजीवदेवश्च्युत्वा दिवस्ततः । तस्याः कुक्षौ सुतात्वेनावातारीच्छेपपुण्यतः ॥ ६ ॥
रत्नावलीस्वप्नलाभानुभावादभवत् क्रमात् । सुता रत्नावलीत्येषा प्रपेदे यौवनं क्रमात् ॥ ७ ॥
चतुःषष्टिकलादक्षाऽप्यसौ शिक्षाशतैरपि । कुतोऽपि हेतुतो द्वेषं पुरुषेषु जहौ न सा ॥ ८ ॥
ततो नृपतिनाऽऽरब्धः स्वयंवरमण्डपः । आहूताः सर्वसामन्ताङ्गजास्तत्र समन्ततः ॥ ९ ॥

अथैष पित्रनुज्ञातः सारसैन्यसमन्वितः । देववद् दीप्तिमान् देवरथोऽपि प्रस्थितस्ततः ॥ १० ॥
व्रजन्नध्वनि सोऽद्राक्षीच्छिन्नपक्षमिव द्विजम् । अप्युत्पतिष्णुं तत्कृत्याक्षमं कमपि खेचरम् ॥११॥
अपृच्छत् तं कुमारोऽथ महाभाग ! भवानिह । कुत आगात् किमेकाकी तिष्ठत्यत्र महावने ? ॥ १२ ॥
सोऽप्याख्यत् शृणु वैताढ्ये कुण्डलाख्यपुरे नृपः । श्रीध्वजस्तस्य पुत्रोऽहं चन्द्रगत्यभिधानतः ॥ १३ ॥
कुलक्रमागतां विद्यामभ्यस्यन्नन्यदा त्वहम् । अधित्यकायामश्रौषं करुणं तरुणीरवम् ॥ १४ ॥
यावत् ससंभ्रमं तत्राधावं तावत् सखीजनैः । वीज्यमानां मीलिताक्षीं मृगाक्षीं वीक्ष्य विस्मितः ॥ १५ ॥
तत्सख्यस्तावदाख्यन्मां साधो ! एह्येहि सत्वरम् । इमां गन्धर्वराट्पुत्रीं विषभृद्विषविह्वलाम् ॥ १६ ॥
त्वरितं प्राणदानेनोपकुरुष्व दयानिधे ! । प्रगुणां तां व्यधां चाहं द्राग् मुद्रारत्नवारिणा ॥ १७ ॥ (युग्मम्).
विषव्यथायां नष्टायां सा क्रमादाप्तचेतना । सखीजनमुखान्यश्रुजलार्द्राणि स्मितानि च ॥ १८ ॥
वीक्ष्य विस्मयवत्यूचे विरुद्धाकृतयः कथम् ? । सख्यो यूयं ममाख्यान्तु परमार्थं कमप्यमुम् ॥ १९ ॥
ता अप्यूचुर्भगिन्यासीराशीविषविषार्दिता । जीविताऽस्यधुनाऽनेन निर्निमित्तोपकारिणा ॥ २० ॥
एतन्निमित्तमेवायं विरोधो नः किलाकृतेः । श्रुत्वेति सानुरागाऽभूत् साऽथ मय्युपकारिणि ॥ २१ ॥
अत्रान्तरे च तत्रागात् स गन्धर्वक्ष्मापतिः । मां श्रीध्वजसुतं मत्वा प्राह स्मेति सगौरवम् ॥ २२ ॥

गौरव्योऽसि कुमार! त्वं किं ते दद्म्युपकारिणे?।गृहाण पाणिमेतस्याः सुताया अविलम्बभाक् ॥ २३ ॥
मत्वा तदाग्रहमहं विवाहं सुमहामहम्। विधाय तामथादाय स्वस्थानेऽस्मि सुखं स्थितः ॥ २४ ॥
अथोद्यानाद् निवृत्तस्य प्रदेशेऽत्र ममाधुना। पितृष्वसुः सुतस्तस्याः सुमेघः खेचरोऽमिलत् ॥ २५ ॥
रोषात् सोऽजल्पदाक्रोशपरो मामिति खेचरः। रे रे! जामिं ममादाय तिष्ठस्यद्यापि दृक्पथि ॥ २६ ॥
तद् दर्शयेऽधुनैवाहं तव दुर्नयजं फलम्। जल्पन्नित्युपतस्थौ द्राक् स मया सममाजये ॥ २७ ॥
प्रतिप्रहर्तुमहमप्यस्मि तस्मिन् समुद्यतः। व्यस्मार्षमाकुलत्वेन चैकं विद्यापदं परम् ॥ २८ ॥
तेनात्र सहसा भूमौ पतितोऽस्म्यत्र संप्रति। पक्षीरिव ममादाय प्रियां नष्टः स च क्षणात् ॥ २९ ॥
इत्येष ते सखे! सर्वो वृत्तान्तोऽस्ति निवेदितः। तद्दुःखदुःखितः प्राह कुमारोऽप्यथ तं प्रति ॥ ३० ॥
पठ त्वं मत्पुरो विद्यां सोऽप्यपाठीच्च तां ततः। पदानुसारिलब्ध्या तत्पदं प्राह स्म भूपभूः ॥ ३१ ॥
निःस्वो निधिमिवासाद्य तन्मुदा खेचरोऽवदत्। सुह्वहं जीवितोऽस्म्यद्य कुमारेणोपकारिणा ॥ ३२ ॥
ध्रुवं सफल एव स्यान्महतामङ्ग! सङ्गमः। कालक्षेपाक्षमं कार्यं परमस्ति ममाधुना ॥ ३३ ॥
गृहाण पाठसिद्धां तद्विद्यां वैक्रियनामिकाम्। तन्मिषेणापि येनाहं कृतार्थः स्यां स्मृतस्त्वया ॥ ३४ ॥
आदात् कुमारस्तां विद्यां सुमेघं सोऽनुधावितः। इतरोऽपि क्रमादापद् रतिरत्नाह्वयं पुरम् ॥ ३५ ॥

प्रवरावसथेष्वावासितः सोऽपि सगौरवम् । क्रमेण सर्वराजन्यकुमारेष्वागतेष्वथ ॥ ३६ ॥
सायमाघोषणाकारि सर्वतोऽपि नृपेण यत् । सर्वैः प्रातः समागम्यं स्वयंवरणमण्डपे ॥ ३७ ॥
दध्यौ देवरथः किन्तु भूषाद्याडम्बरेण चेत्। भाग्यं मे तद् वृणीते मां कन्या सामान्यमप्यहो ? ॥ ३८ ॥
ध्यात्वेति स्ववयस्यं स्वासनि संस्थाप्य स स्वयम्। किञ्चित्कुरूपो भूत्वा तत्पुरो वीणामवादयत् ॥ ३९ ॥
आगादत्रान्तरे तत्र कन्याऽऽरुह्य सुखासनम् । तद्रूपदर्शनात् सर्वे चुक्षुभुः क्ष्माभृदङ्गजाः ॥ ४० ॥
दृष्टिर्नास्या निविष्टा तु कस्मिन्नपि नृपाङ्गजे । अरज्यत्प्राग्भवप्रेम्णा सा वीणावादके परम् ॥ ४१ ॥
सा वाला वरमालां चाक्षैप्सीत् तत्कण्ठकन्दले। जनोक्तिरिति तत्राभूद् धिग् गन्धर्वो वृतोऽनया ॥ ४२ ॥
रवितेजा निशम्येति जनवाचं विषादभाक्। दध्यौ ध्रुवं नितम्बिन्यो निम्नगा इव निम्नगाः ॥ ४३ ॥
कृतरूपपरावर्त्तो यद्वा कोऽपि महानसौ । भावी रत्नावली स्वप्ने यन्मात्राऽस्यास्तदेक्षिता ॥ ४४ ॥
वृतोऽनयाऽयं गन्धर्व इत्यमर्षवशंवदाः । सर्वेऽपि भूभुजो गर्वात् समराय समुत्थिताः ॥ ४५ ॥
रवितेजा नृपस्तानित्यूचे भोः ! कोऽयमञ्जसा । अकाण्डे समरारम्भो नृपाः ! शृणुत मद्वचः ॥ ४६ ॥
यदि राज्ये पञ्चदिव्यैः प्राकृतोऽपि निवेश्यते । यदिवेष्टं वरं कन्या वृणुते च स्वयंवरा ॥ ४७ ॥
तदन्येषां हि को मानभङ्गः का वा त्रपा मता?। यदि चेर्प्यां विधास्यध्वे तदा विपदमाप्स्यथ ॥ ४८ ॥

तथापि कुग्रहावेशात् ते कुमारमवेष्टयन् । स चैकोऽपि शरव्रातैस्तानजैषीत् क्षणादपि ॥ ४९ ॥
रवितेजा नृपस्तत्र तच्छौर्यं वीक्ष्य विस्मितः । जज्ञौ विमलकीर्त्तेस्तं सुतं तन्मित्रवाक्यतः ॥ ५० ॥
जातप्रकृतिरूपं तं रत्नावल्या व्यवाहयत् । स्थित्वा तत्र कियत्कालं प्रतस्थे स्वपुरं च सः ॥ ५१ ॥
अथ स्वावसथे देवरथो दयितया सह । रत्या स्मर इवाभुङ्क्त सुखं विषयगोचरम् ॥ ५२ ॥
आयासीदन्यदोद्याने तत्र धर्मवसुर्गुरुः । तं वन्दितुं गतो भूपो देशनां चाशृणोदिति ॥ ५३ ॥
भोः! भव्याः! इह संसारपारावारे हि देहिनाम्। निमज्जतां विशुद्धोऽयं धर्मः पोतसमो मतः ॥ ५४ ॥
रागादिदोषनिर्मुक्तो देवः सर्वज्ञ उच्यते । अदृष्टोऽपि स दृष्टस्तैर्यैस्तद्धर्मो हृदीकृतः ॥ ५५ ॥
भविको योऽत्र सत्पञ्चपरमेष्ठिपदस्मृतिम् । करोति नित्यं तस्य स्यान्निःश्रेयसपदाश्रयः ॥ ५६ ॥
त्रीन् पञ्च सप्त वा वारानशने शयनेऽपि यः। ध्यायेन्मन्त्राधिराजं स स्यादवश्यं सुखास्पदम् ॥ ५७ ॥
तथाह्यत्रैव भरते ग्रामे सुग्रामनामनि । प्रकृत्या भद्रधीः कोऽपि सङ्गतो नाम पामरः ॥ ५८ ॥
सोऽन्यदा निशि वासाय मुनिभ्योऽदादुपाश्रयम् । तेऽपि ध्येयतया तस्य परमेष्ठिपदान्यदुः ॥ ५९ ॥
स तान्याजीवितं स्मृत्वाऽऽयुःक्षये नन्दिपत्तने । पञ्चाननृपस्याभूत् सुतो रत्नशिखाभिधः ॥ ६० ॥
स तत्र नृपतिर्भूत्वा राज्यं विन्यस्य मन्त्रिषु । देशान्तरदिदृक्षायै चलितः कलितोद्यमः ॥ ६१ ॥

ग्रामाकरपुरादीनि लङ्घयन् कुत्रचिद् वने । एकं महागजं दृष्ट्वा वशीकृत्यारुरोह तम् ॥ ६२ ॥
तत्कण्ठकन्दलेऽकस्मादपि पुष्पस्रगापतत् । विस्मितोऽग्रे चलन् दृष्ट्वा पुरश्चैकं महासरः ॥ ६३ ॥
कृत्वा तत्र जलक्रीडां स यावत् तत्तटे स्थितः । ददौ दिव्यदुकूलानि काऽप्यस्मै तावदङ्गना ॥ ६४ ॥ (युग्मम्).
ऊचे साऽपूर्वदेवस्य स्वागतं तव संप्रति । नृपः प्राह कथं भद्रेऽपूर्वदेवोऽस्मि तद् वद ? ॥ ६५ ॥
सस्मिता विस्मितायाख्यत् क्षितीशायेति सा तदा । सम्यगाराधिता देवा निर्वृतिं ददते न वा ? ॥ ६६ ॥
दृष्टमात्रोऽपि नः सख्यास्त्वमदा देव ! निर्वृतिम् । तत एव त्वमत्रैषोऽपूर्वदेवो निगद्यसे ॥ ६७ ॥
नृपोऽवोचत् सखी कैषा कथं वाऽहं तयेक्षितः ? । साऽऽख्यदस्त्यत्र वैताढ्ये सुरसङ्गीतपत्तनम् ॥ ६८ ॥
तत्राभूत् सूरणो नाम नृपतिस्तस्य वल्लभा । एका स्वयंप्रभा नाम्नी पराऽऽसीच्च महाप्रभा ॥ ६९ ॥
शशिवेगसूरवेगाभिधौ सविनयौ तयोः । उभावभूतां तनयौ सर्वदाऽप्युल्लसन्नयौ ॥ ७० ॥
अन्यदा सूरणो राज्ये शशिवेगं निवेश्य तम् । रवितेजोगुरूपान्ते प्राव्राजीद् विरतो भवे ॥ ७१ ॥
तद्राज्येऽथ सूरवेगः सुवेगाह्वं स्वमातुलम् । सहायीकृत्य युद्धायोपतस्थौ लोलुभः श्रियाम् ॥ ७२ ॥
शशिवेगो निजं हित्वा पुरं सुगिरिभूधरात् । परतो नूतनं न्यस्य पुरं तत्र स तस्थिवान् ॥ ७३ ॥
अस्ति चन्द्रप्रभा नाम दुहिता तस्य भूपतेः । नैमित्तिकोऽन्यदा कोऽपि तां दृष्ट्वाऽऽचष्ट शिष्टधीः ॥ ७४ ॥

वालयिष्यति ते राज्यं य एतां परिणेष्यति । कथं स ज्ञास्यत इति नृपोक्ते सोऽप्यभाषत ॥ ७५ ॥
वने महागजं मत्तं वशे यो द्राग् विधास्यति । ज्ञेयश्चन्द्रप्रभाभर्त्ता स नूनं वलवत्तरः ॥ ७६ ॥
आरभ्य तद्दिनादेवाधोरणैरपि रक्षितः । ह्यस्तनेऽह्नि स गन्धेभः प्रोन्मूल्यालानमञ्जसा ॥ ७७ ॥
अत्रारण्येऽविशत् तत्रागता पितृनिदेशतः । चन्द्रप्रभा देवकण्ठे चिक्षेप वरमालिकाम् ॥ ७८ ॥ ( युग्मम् ).
इदं दिव्यदुकूलादि प्राहिणोत् सैव तेऽनघ !। इत्युक्तवत्यां तस्यां द्रागागात् सैन्यं कुतोऽप्यथ ॥ ७९ ॥
यावत् पश्यति भूपस्तत् तावत् केनापि सादिना । पुरस्सरेण भूपालः पप्रच्छे इति साञ्जसम् ॥ ८० ॥
गजारूढो नरः कश्चित् त्वया दृष्टोऽत्र कानने ? । यतस्तद्दर्शनोत्कण्ठा वर्त्ततेऽस्मत्प्रभोर्भृशम् ॥ ८१ ॥
खेचर्यूचे स एवैष सादी श्रुत्वेति तद्वचः । वसुतेजोनृपस्यैतां तत्प्रवृत्तिं न्यवेदयत् ॥ ८२ ॥
सचिवैस्तं समाहूय सोऽप्यष्टौ कन्यका निजाः।दत्त्वा तस्मै निजे राज्ये तं च रत्नशिखं व्यधात् ॥८३॥
स्वयं च सुगुरोः पार्श्वे तपस्यां स प्रपेदिवान् । शशिवेगोऽपि तां वार्त्तां श्रुत्वा तत्रैत्य सत्वरम् ॥८४॥
चन्द्रप्रभाभिधां पुत्रीं तस्मै प्रादान्मुदान्वितः । सहस्रविद्यासंयुक्तां विद्यां चाप्यपराजिताम् ॥ ८५ ॥ ( युग्मम् ).
ज्ञात्वा व्यतिकरं चैनं सुवेगाह्वः स खेचरः । समागाद् गजरूपेण तत्पुरोद्यानसीमनि ॥ ८६ ॥
कौतुकात् तज्जिघृक्षायै वनं रत्नशिखोऽप्यगात् । यावद् गजं वशीकृत्य समारोहत् स भूपतिः ॥ ८७ ॥

उत्पपात गजस्तावत् सहसा स नभोऽङ्गणे । संभ्रान्तो भूपतिस्तं चाताडयद् दृढमुष्टिना ॥ ८८ ॥ ( युग्मम् ).
तद्घातपीडितोऽथासौ विस्मरन् मन्त्रचिन्तनम् । स्वरूपस्थो नमोऽर्हद्भ्यो भणन्नित्यपतद् भुवि ॥ ८९ ॥
श्रुत्वेत्याशातितो हा ! धिग् मया साधर्मिकोऽप्ययम् । ध्यायन्निति व्यधाद् भूभुक् स्वस्थं तं जलमारुतैः ॥ ९० ॥
तं च रत्नशिखोऽवोचत् सम्यक्त्वं साधु साधु ते । आपत्स्वपि यदस्मार्षीर्नमस्कारं सुचेतसा ॥ ९१ ॥
क्षमस्वागो मयाऽज्ञाततत्त्वेनासि यदाहतः । सोऽप्याचष्ट न मन्तुस्ते पापीयानहमेव हि ॥ ९२ ॥
यद्विदन्नपि ते कर्तुं विप्रियं चाहमुद्यतः । अस्मि चक्रपुरस्वामी सुवेगो नाम खेचरः ॥ ९३ ॥
जामेयपक्षपातेन शशिवेगः स खेचरः । पितृप्रदत्तराज्योऽपि मया निर्वासितः पुरात् ॥ ९४ ॥
तस्य जामातृतो राज्यलाभं शृण्वन्नमर्षभाक् । त्वद्वधाय मुधाऽधावं द्विपरूपधरो ह्यहम् ॥ ९५ ॥
साधर्मिकवत्सलेन त्वया साऽस्मि बोधितः । निर्विण्णो भववासाच्च गृहीष्याम्यधुना व्रतम् ॥ ९६ ॥
तत् त्वं गृहाण मद्राज्यं क्षमयित्वा यथा द्रुतम् । शशिवेगं नृपं साधो ! साधयामि स्वमीप्सितम् ॥ ९७ ॥
खेचराद् ज्ञातवृत्तान्तः शशिवेगस्तदागमत् । सुवेगः क्षमयित्वा तं प्रत्यपद्यत संयमम् ॥ ९८ ॥
क्रमाद् विद्याधरश्रेणिविभू रत्नशिखोऽभवत् । परदेशेऽपि पुण्याढ्याः प्राप्नुवन्त्युत्तमश्रियम् ॥ ९९ ॥
अवेत्य सूरवेगोऽपि स्वमातुलकथां च ताम् । बन्धुना रक्ष्यमाणोऽपि वैराग्यादग्रहीद् व्रतम् ॥ १०० ॥

# पञ्चमो भवः ।

अथाऽस्ति प्राग्विदेहेऽत्र पुष्कले विजये पुरी । विशाला नाम तत्राऽस्ति सिंहसेनाभिधो नृपः ॥ १ ॥
प्रियङ्गुमञ्जरी राज्ञी तस्याभूच्छ्रीरिवाङ्गिनी । दम्पती तौ मिथः प्रेम्णा समयं नयतः सुखम् ॥ २ ॥
अथ च्युत्वा दिवो देवरथजीवोऽवतीर्णवान् । प्रियङ्गुमञ्जरीकुक्षौ शुक्तौ मुक्तामणिर्यथा ॥ ३ ॥
पूर्णचन्द्रमहास्वप्नानुसारेण पिताऽकरोत् । पुत्रस्य पूर्णचन्द्राह्वां शुभेऽह्नि सुमहामहम् ॥ ४ ॥
अथ रत्नावलीदेवश्च्युत्वा तत्रैव सत्पुरि । देव्या भ्रातुर्विशालस्य सामन्तस्य सुताऽभवत् ॥ ५ ॥
पुष्पमालामहास्वप्नदर्शनात् पुष्पसुन्दरी । जाता सद्गुणरत्नैकखनी देवकनीनिभा ॥ ६ ॥
सा तारुण्यं वयः प्राप्ताऽन्यदा पित्रोर्निदेशतः । वसन्तर्त्तौ सखीयुक्ता गतोद्यानं निरीक्षितुम् ॥ ७ ॥
क्रीडित्वा सुचिरं तत्र माधवीवल्लिमण्डपे । हृतश्रमा समारेभे वीणां वादयितुं मुदा ॥ ८ ॥
अत्रान्तरे सवयोभिः सेव्यमानः स कौतुकात् । तत्रायातः पूर्णचन्द्रस्तया सस्नेहमीक्षितः ॥ ९ ॥
प्राग्भवाभ्युल्लसत्प्रेमरसात् तद्रूपदर्शनात् । पुष्पसुन्दर्यवाप्ताऽसौ पुष्पेषुशरगोचरम् ॥ १० ॥

कथं नु पुष्पसुन्दर्याः पूर्णचन्द्रो वरो भवेत् ? । उचितो यदयं योगो मणिहेम्नोरिवेक्ष्यते ॥ २४ ॥
इत्यालोच्य मिथो भ्रातृजामी रन्तुं युवामिह । वने समादिदिशतुर्द्रुतं वां सङ्गमार्थिनौ ॥ २५ ॥
निशम्येति सखीवाचं साऽभून्निर्वृतमानसा । कुमारोऽपि स्वमित्रोक्तप्रवृत्तेर्निर्वृतो हृदि ॥ २६ ॥
अथ प्रशस्तेऽह्नि तयोः पाणिग्रहमहामहम् । सिंहसेनविशालाख्यौ पितरौ चक्रतुर्मुदा ॥ २७ ॥
पूर्णचन्द्रकुमारोऽसावथ मारोपमः श्रिया । प्रियया पुष्पसुन्दर्या समं शर्म समन्वभूत् ॥ २८ ॥
अन्यदा पुष्पशालाख्योद्यानेऽत्र समवासरत् । श्रीसुरसुन्दराचार्यो नृपस्तं वन्दितुं ययौ ॥ २९ ॥
पूर्णचन्द्रकुमारोऽपि तत्रागाद् दयितायुतः । सर्वेऽपि शुश्रुवुस्तस्य व्याख्यां द्राक्षानुवादिनीम् ॥ ३० ॥
अथास्य मुनिनाथस्याद्भुतरूपं विलोकयन् । अपृच्छद् विस्मयापूर्णः पूर्णचन्द्रस्तमित्ययम् ॥ ३१ ॥
प्रभो ! अत्यद्भुतं रूपं राजते वो नवं वयः । प्रत्यक्षैर्लक्षणैरेभिर्जाता मन्ये महत्कुले ॥ ३२ ॥
कुतो वैराग्यतो घोरमिदमङ्गीकृतं व्रतम् । भगवन् ! विस्मयो मेऽसौ तच्छुश्रूषामि कारणम् ॥ ३३ ॥
सूरयोऽप्यूचिरे भूपभवायं भव एव नः । वैराग्याय तथाऽपि त्वं शृण्वथ प्रथितां कथाम् ॥ ३४ ॥
पुरं रत्नपुरं तत्र महेभ्यः सुधनाभिधः । लक्ष्मीरिवाङ्गिनी तस्य लक्ष्मीरित्यभवत् प्रिया ॥ ३५ ॥
सुरसुन्दरनामाहं तयोः पुत्रोऽतिवल्लभः । द्वात्रिंशद् दयिताः पित्रा तारुण्ये च विवाहितः ॥ ३६ ॥

तथाह्यत्रैव विजये पुरे जयपुरे नृपः । शत्रुञ्जयाख्यस्तत्पुत्रौ शूरचन्द्राभिधावुभौ ॥ ५० ॥
युवराज्ञि कृते शूरे चन्द्रः परिभवं वहन् । गतो देशान्तरे रत्नपुरे तत्रानमन्मुनिम् ॥ ५१ ॥
श्रुत्वा धर्मं मुनेः पार्श्वात् निरागःप्राणिघाततः । निवृत्तस्तत्र शिश्राय जयसेनं स भूपतिम् ॥ ५२ ॥
आज्ञापितोऽन्यदा राज्ञा स इति त्वमतर्कितः । यत् कुम्भचरटं सुप्तं निशि संवेष्ट्य घातय ॥ ५३ ॥
सोऽपि स्वनियमं स्मृत्वा प्रावर्त्तिष्ट न तद्विधौ । ततो राज्ञाऽतिविश्वासाच्चक्रेऽसौ स्वाङ्गरक्षकः ॥ ५४ ॥
अन्यदा शौर्यवृत्त्याऽसौ कुम्भं वद्धा समानयत् । लब्धप्रसिद्धिश्चन्द्रस्तं नियमं प्रत्यपालयत् ॥ ५५ ॥
शूरोऽथ युवराजाऽपि राज्यार्थी जनकं निजम् । प्रहारजर्जरं कृत्वा निरगाद् निशि मन्दिरात् ॥ ५६ ॥
देव्या दृष्टो यामिकैश्च कोलाहलरवोत्थितः । वद्धाऽऽनीतो नृपस्याग्रे प्रातः सर्वैः स लक्षितः ॥ ५७ ॥
कोपाद् निर्विषयीचक्रे नृपस्तमथ मन्त्रिणः । प्रेष्य चन्द्रकुमारं चानाययत् सोऽपि सत्वरम् ॥ ५८ ॥
स पितृमिलनाकुण्ठोत्कण्ठो जवनयानयुक् । जयसेनमनुज्ञाप्य समागात् स्वपुरं प्रति ॥ ५९ ॥
शत्रुञ्जयनृपश्चन्द्रं स्वे राज्येऽस्थापयत् ततः । शस्त्रघातार्दितः शूरे स मात्सर्यमनुत्सृजन् ॥ ६० ॥
मृत्वा द्वीप्यभवच्छूरो भ्राम्यंस्तेन हतो वने । स शूरः शवरश्चासीत् पुनस्तत्रैव कानने ॥ ६१ ॥
मृगयायै भ्रमन् जघ्ने स तेन द्वीपिना पुनः । द्वीपी च शेषशवरैर्विशिखैर्निहतो मृतः ॥ ६२ ॥

वने तत्र ततोऽभूतां तौ वराहावुभावपि । युध्यन्तौ तौ मिथो वैराद् निजघ्नुः शवराः क्षणात् ॥ ६३ ॥
वने तत्रैव मृत्वा तौ पुनर्जातौ मृगार्भकौ । मिथो युद्धपरौ तत्राऽप्यवधील्लुब्धकश्च तौ ॥ ६४ ॥
वनेऽभूतां ततश्चेभौ युध्यन्तौ तौ वनेचरैः । गृहीत्वा चन्द्रभूपस्योपनीतौ दैवयोगतः ॥ ६५ ॥
तत्राऽपि तौ युद्धपरावरक्षन् हस्तिपालकाः । अन्यदाऽथागतस्तत्र ज्ञानी पृष्टः स भूभुजा ॥ ६६ ॥
प्रभो ! महेभयोः कस्मादनिशं वैरमेतयोः ? । प्राग्भवान्मुनिरप्याख्यदशेषानपि तांस्तयोः ॥ ६७ ॥
श्रुत्वेति भूपतिश्चन्द्रो वितन्द्रो धर्मकर्मणि । संविग्नो व्रतमादाय त्रिदिवे त्रिदशोऽभवत् ॥ ६८ ॥
तावनुत्सृष्टमात्सर्यौ गजौ युद्ध्वा मृतौ ततः । रत्नप्रभायां श्वभ्रोर्व्यामभूतां नारकावुभौ ॥ ६९ ॥
तत्प्राणिघातविरताविरतेषु चैवं दृष्ट्वा गुणांस्तदितरांश्च सुखासुखानाम् ।
मूलं विभाव्य भविनो विरमन्तु मन्तुनिर्मुक्तजन्तुगणघातभवांहसोऽस्मात् ॥ ७० ॥

इति प्रथमाणुव्रते शत्रुञ्जयशूरचन्द्रकथा ।

इति मुनिपतिमुखगदितां निशम्य ता विनयतो नता वनिताः । प्रथमाणुव्रतनिरता बभूवुरसुमद्वधाद् विरताः ॥७१॥
निशम्येत्यहमुर्वीशसुताथा ह्यचिन्तयम् । हितमेतन्ममैता यद् विरता जन्तुघाततः ॥ ७२ ॥
कुपिता अपि यन्नैताः कर्त्तारो विप्रियं मम । तद्दास्येऽहं यष्टिघातांस्तस्मै पञ्चैकवर्जितान् ॥ ७३ ॥

अत्रान्तरेऽवदत् साधुः सुधामधुरया गिरा । अहमप्यस्मि तत्रैतद्वाक्याकर्णनकौतुकी ॥ ७४ ॥
वक्तव्यं सत्यमेवात्रोपयुक्तैर्युक्तिमद् वचः । सत्यवाक् प्रत्ययस्थानं भवेत् सर्वाङ्गिनां प्रियः ॥ ७५ ॥
सत्येनाग्निर्भवेच्छीतो मार्गं दत्तेऽम्बु सत्यतः । नासिश्छिनत्ति सत्येन सत्याद् रज्जूयते फणी ॥ ७६ ॥
यन्मूकत्वादयो दोषाः स्युः परत्रेह चायशः । जन्तूनां जायते यस्मात् तदसत्यं त्यजेत् सुधीः ॥ ७७ ॥
वञ्च्यते नहि केनापि सत्यवाग् धनवद् भुवि । आत्मानमात्मनैवान्यो वञ्चयेद् धरणो यथा ॥ ७८ ॥
अत्रैव विजयेऽभूतां सुदर्शनपुरे वरे । सुदत्तवणिजः पुत्रौ धनश्च धरणाभिधः ॥ ७९ ॥
धनो निसर्गतः सत्यवाक् तथा सत्यसङ्गरः । धरणो विपरीतस्तु मिथः प्रीतिस्तयोरभूत् ॥ ८० ॥
धनो मनसि निर्दम्भोऽभवदन्यस्तु दम्भभाक् । वाङ्मनःकायसंशुद्धिः स्यात् सतामेव नासताम् ॥८१॥
पित्रोर्गौरवमालोक्य धनस्य धरणोऽन्यदा । दध्यौ मम गृहे सत्यस्मिन् पित्रोर्नैषदादरः ॥ ८२ ॥
जगाद धनमन्येद्युर्धरणो भ्रातरस्ति मे । कौतुकं दूरदेशेभ्योऽधुना धनमुपार्जितुम् ॥ ८३ ॥
धनोऽवादीत् कथं भ्रातस्तत्र गत्वार्ज्यते धनम्? । विषमा दूरमध्वानो मुग्धौ त्वावां स्तनन्धयौ ॥ ८४ ॥
उवाच धरणो भ्रातरावां देशान्तरं गतौ । छलच्छद्मादिकृत्येनार्जयावो विभवं बहु ॥ ८५ ॥
आकर्ण्येति धनः कर्णौ पिधाय धरणं जगौ । भ्रातर्मैवेदृशं ब्रूहि नरकादिगतिप्रदम् ॥ ८६ ॥

तन्मिथ्या दुष्कृतं देहि न वाच्यं पुनरीदृशम् । यन्नयेनार्जिता लक्ष्मीः सौख्यायेह परत्र च ॥ ८७ ॥
नेष्टमस्येदमित्यन्तर्विचिन्त्य धरणोऽवदत् । नेच्छामि मनसाप्येतत् त्वच्चित्तं तु मयेक्षितम् ॥ ८८ ॥
कुर्वो नीवीं समादाय व्यवहृत्या धनार्जनम् । इति प्रत्यायितः प्रेम्णा धनस्तत् प्रतिपन्नवान् ॥ ८९ ॥
अनुक्त्वैव ततो मातृपित्रोस्तौ निर्गतौ पुरात् । लङ्घयन्तौ पुरग्रामारामादीन् क्वापि तस्थतुः ॥ ९० ॥
धरणश्चान्यदा दध्यौ कथं नायात्यसौ गृहे । कुर्वे तत् कञ्चनोपायं लब्धधीश्चाब्रवीद् धनम् ॥ ९१ ॥
किं धर्मेण जयो भ्रातः ! पापेनाथ जने वद । आख्यत् सोऽप्येतदाबालगोपालं ख्यातमीक्ष्यते ॥ ९२ ॥
धर्मादेव जयः संपद् यशः सर्वैरवाप्यते । अधर्माच्चायशो दुःखदौर्गत्यादि भवेद् नृणाम् ॥ ९३ ॥
धरणः प्राह वातूलो वेत्सि तत्त्वं न किञ्चन । पापादेव जयो वाद उभयोरित्यभूत् तदा ॥ ९४ ॥
धरणोऽवददासन्नग्रामे वादस्य निर्णये । कृते योऽसत्यगीस्तस्य ग्राह्यमन्येन लोचनम् ॥ ९५ ॥
धनोऽवग् ननु तथ्यो मे पक्षो नेत्रं तु नाददे । उक्त्वेति तौ गतौ ग्रामं पृष्टाः पर्षद्गता जनाः ॥ ९६ ॥
तेऽवोचन् साम्प्रतं पापाद् जयो धर्माच्च नेक्ष्यते । श्रुत्वेति धरणो हृष्टः प्राह देयं त्वयाऽक्षि मे ॥ ९७ ॥
द्वितीयस्मिन्नपि दिने विवदन्तौ तथैव तौ । पणीकृत्य द्वितीयाक्षि पुनर्ग्राम्यानपृच्छताम् ॥ ९८ ॥
ग्राम्यैः पुनस्तथैवोक्तं ततस्तौ जग्मतुर्वनम् । उवाच धरणोऽप्यापि प्रतिपद्यस्व मद्वचः ॥ ९९ ॥

देहि वा हारितं नेत्रद्वयं ब्रूह्यथ नो व्यधाम्। द्यूतं त्वया सहावादीत् सत्यवादीति सोऽप्यदः ॥ १०० ॥
कृतमेव मया द्यूतं त्वदायत्ते च मेऽक्षिणी। कुरु यद् रोचते तुभ्यमित्युक्तिनिभृते धने ॥ १०१ ॥
तथाविधतरुक्षीरक्षेपणादक्षिणी क्षणात्। सोऽक्षेप्सीद् भ्रातुरेषोऽपि तस्मिन् नेषद्रुषं व्यधात् ॥ १०२ ॥
दम्भर्धीधरणोऽस्वग् हा ! पापोऽकार्षं त्वयीदृशम्। इत्यमुं विलपन्तं सोऽधारयन्मधुरोक्तिभिः ॥ १०३ ॥
व्याघ्रा व्याघ्र इतो भ्रातर्ब्रुवन्नित्युदितोऽमुना। पलायस्व द्रुतं तत् त्वं माभूद् यन्नः कुलक्षयः ॥ १०४ ॥
पलाय्य सोऽपि संपूर्णेप्सितः स्वपुरमासदत्। परिभ्रमन् धनोऽप्यापदेकं प्रवरशाखिनम् ॥ १०५ ॥
तत्रस्थं तं क्व मे भ्राता गतो वा कथमस्ति सः ?। मुहुः खिद्यन्तमित्यन्तरैक्षिष्ट वनदेवता ॥ १०६ ॥
अहो ! सौजन्यमस्याहो ! दौर्जन्यमपरस्य तु। ज्ञात्वेति तं जगौ देवी वत्सालं तस्य चिन्तया ॥ १०७ ॥
नेत्ररोगहरीमेतां वत्सादत्स्वाञ्जनौषधीम्। वदन्तीत्यमरी दत्त्वा तां तस्मै द्राक् तिरोऽभवत् ॥ १०८ ॥
तदञ्जनप्रयोगेण धनः प्रगुणलोचनः। सुभद्रनगरं प्रापदतिक्रम्य महाटवीम् ॥ १०९ ॥
नेत्ररोगार्दिता तत्र राज्ञः कन्याऽस्ति तत्कृते। पटहं वाद्यमानं चाघोषणां सोऽश्रृणोदिति ॥ ११० ॥
कन्यारत्नं प्रगुणनयनं यः सृजेत् तस्य राजा राज्यस्यार्द्धं वितरति सुतां चेति सम्यग् निशम्य।
स्पृष्ट्वा सोऽप्यानकमपगदं नेत्रयुग्मं विधाय प्राज्यप्रीत्या नृपतितनयां पर्यणैषीद् धनस्ताम् ॥ १११ ॥

लब्ध्वा राज्यार्द्धमेषोऽपि सुखाम्भोनिधिमध्यगः । श्रियेवाधोक्षजोऽनैषीदर्द्धां वध्वाऽन्वितस्तया ॥११२॥
अन्यदा वाडवः कोऽपि पुरादागात् सुदर्शनात् । लक्षयित्वा तमात्मीयं धनोऽनैषीद् निकेतनम् ॥११३॥
सत्कृत्याशनपानाद्यैर्धनः पप्रच्छ तं द्विजम् । स्वपित्रोः कुशलोदन्तं स्वभ्रातुर्द्धरणस्य च ॥ ११४ ॥
सोऽप्याख्यद् यत्प्रभृति ते व्याघ्राच्छुश्रुवतुर्भयम् । पितरौ तद्दिनाद् दुःखमासाते तावहर्निशम् ॥ ११५ ॥
धरणस्तरुणो नीरुग् दृष्टो व्यवहरन् पुनः । श्रुत्वेति मुदितश्चित्ते धनोऽदात् तस्य दक्षिणाम् ॥ ११६ ॥
ततो नामाङ्कितां मुद्रां लेखं दत्त्वा व्यसर्जयत् । धनस्तं सोऽपि लेखाद्यं तत्र पित्रे समार्पयत् ॥ ११७ ॥
सुदत्तः कुशलोदन्तं श्रुत्वा भाग्यमथाद्भुतम् । निजात्मजस्य मुदितो व्यधाद् वर्द्धापनोत्सवम् ॥ ११८ ॥
अध्यासीद् धरणोऽप्येवमायासीत् स कथं पुरम्? । यत् तथा तत्र मुक्तोऽयमासीद् गुरुवने तदा ॥११९॥
कथं वेदकश्रियं प्रापद् दैवान्मे प्रातिकूल्यकृत् । न चिन्त्यते तद् घटयेत् कृत विघटयेद् विधिः ॥ १२० ॥
अत्रागतोऽयं मे भावी लाघवाय ततो द्रुतम् । गत्वोपायान्तरं कुर्वे येन न स्यादयं धनः ॥ १२१ ॥
ध्यात्वेत्यूचे स पितरं भ्रातुरुत्कण्ठितोऽस्म्यहम् । गच्छामि त्वदनुज्ञातः सोऽपि तं व्यसृजद् मुदा ॥१२२॥
आगात् सुभद्रं धरणो धनस्तं वीक्ष्य हर्षतः । समालिङ्गत् परो वीक्ष्य तच्छ्रियं दौर्मनस्यितः ॥ १२३ ॥
दध्यौ धर्माज्जयः सत्यमिति चक्र श्रियाऽनया । धनोऽयं विपरीतं तदद्य कुर्वे क्षणादहो ! ॥ १२४ ॥

ततोऽसौ लाल्यमानोऽपि पाल्यमानोऽपि बन्धुना। प्राहान्येद्युर्नृपं देव! सहस्राक्षा हि भूभुजः ॥१२५॥
वञ्चितः किमनेन त्वं यदस्मा अप्यदाः सुताम्। अविचार्य कुलं शीलं नासीत् किं कोऽपि धीप्रदः ? ॥ १२६ ॥
यथास्थं वच्मि चेद् देवो नाख्यात्यस्मै ममोदितम्। यद् बिभेम्यसुरादस्मादहं दुर्नयकारिणः ॥ १२७ ॥
प्रतिपन्ने नृपेणेति सोऽवोचत् श्वपचो ह्ययम् । अस्मत्पुरे विरुद्धात्माऽत्रैतो निर्विषयीकृतः ॥ १२८ ॥
युष्माभिरविमृश्यैव विवाह्य प्रापितः श्रियम् । भाषितोऽस्म्यमुनात्मीयवृत्तजल्पविधौ भृशम् ॥ १२९ ॥
तन्मां मोचय यत् क्वापि तीर्थे गत्वा स्वशोधनम्। कुर्वे नृपोऽपि तत् सत्यं मन्वानस्तमदोऽवदत् ॥१३०॥
भद्र ! मुष्टः शठः सुष्ठु निद्राति न ततस्त्वया। वाच्यमन्यस्य येनाहं यतिष्ये तत्कृते रयात् ॥ १३१ ॥
धरणोऽगान्नृपं नत्वाऽथादिशद् भूविभुर्भटान्। प्रातर्वर्चोगृहे वध्यो धनोऽसौ छन्नमेव भोः! ॥ १३२ ॥
ययुस्ते प्रतिपद्येति तत्र प्राग् भूपसेवकाः । शिरोऽर्त्या च धनः प्रैषीद् धरणं नृपपर्षदि ॥ १३३ ॥
सोऽप्यागादात्मवपुषः शुद्ध्यै वर्चोगृहं तदा । जघ्ने प्रागभियुक्तैस्तैर्भटैश्च धरणो जवात् ॥ १३४ ॥
कृतो बुम्बारवस्तत्र पानीयपरिचारिणा । ज्ञातवृत्तो धनोऽप्यागाद् मूर्च्छितश्चापतद् भुवि ॥ १३५ ॥
देहस्थितिं नो कुरुते स कृतेऽप्यौर्ध्वदेहिके । श्रुत्वेत्यतर्कयद् भूपो मुग्धात्मा नन्वयं धनः ॥ १३६ ॥
पुण्याब्धेस्तस्य तत्पापनुन्नेनानेन ही विधेः । विलासात् स्ववधायैवमूचेऽसत्यं हि दुर्धिया ॥ १३७ ॥

अथासावभ्यधात् साधुर्माधुयविदितं वचः। नादेयमणु वाऽनल्पमदत्तं कुशलार्थिभिः ॥ १४९ ॥

परस्वापहारादिहामुत्र जीवा न कस्यापि विश्वासपात्रं भवन्ति।

वधोद्बन्धने हस्तपादादिभङ्गं लभन्ते च दारिद्र्यदुःखानि कामम् ॥ १५० ॥

ये च परस्वग्रहणे विरतास्ते सिद्धदत्त इव सौख्यम्। ये च रतास्ते घोरं दुःखं विन्दन्ति कपिल इव ॥१५१॥

कानिमौ तावितिं प्रोक्ते ताभिराख्यत् स साधुराट्। विशालाख्यपुरेऽभूतां वणिजौ सुहृदौ मिथः ॥१५२॥

तत्रैको मातृदत्तश्च वसुदत्तो द्वितीयकः। अन्येद्युस्तौ पुरोद्याने प्रयातौ नेमतुर्मुनिम् ॥ १५३ ॥

आदत्त मातृदत्तः सोऽदत्तस्वविरतिं तदा। मुनेरुपान्ते नान्यस्तु वसुदत्तः सतृष्णहृत् ॥ १५४ ॥

द्वावप्यल्पधनावाद्यः परं सद्व्यवहारवान्। अन्यः कूटतुलाकूटमानाद्येषु प्रवर्त्तते ॥ १५५ ॥

अन्येद्युरल्पमूल्यानि पण्यान्यादाय तौ ततः। चलितौ व्यवसायेन नगरे पाण्डुवर्द्धने ॥ १५६ ॥

वसुतेजा नृपस्तत्र नरं कञ्चिदवञ्चकम्। कोशाध्यक्षं विधित्सुश्चाध्वनि स्वर्णाद्यचिक्षिपत् ॥ १५७ ॥

निजानाप्तनरांस्तत्र परीक्षायै नृपोऽमुचत्। वणिजौ पश्यतः क्वापि तौ पथि स्वर्णकुण्डलम् ॥ १५८ ॥

अहो! स्वयंवरेयं श्रीरित्याख्यन् स तदभ्यगात्। वसुदत्तो निषिद्धश्चेतरेण ज्ञातदर्शनात् ॥ १५९ ॥

यथा स्वनगरे देवयशाह्वौ वणिजावुभौ। साधारणं व्यवसायं मिथस्तौ चक्रतुः सदा ॥ १६० ॥

सत्त्वेन तेऽमुना भूपः प्रसादं द्राग् विधास्यति। सोऽवग् वरमिदं सर्वमादत्तामुं तु मुञ्चत ॥ १७४ ॥
सहध्वमपराधं नौ ग्राम्यौ विद्वो न किञ्चन। सभायां भूपतेः कार्यं सुभटाः ! नु किमावयोः ? ॥१७५॥
तद्गिरा वसुदत्तं ते मुक्त्वा तं मातृदत्तकम्। अनैषुश्च सविनयं भूत्या भूपतिसंसदम् ॥ १७६ ॥
निवेदितस्तैर्वृत्तान्तस्तस्य भूपोऽपि पृष्टवान्। मातृदत्तं कुतो भद्र ! निरीहस्त्वं परश्रियाम् ? ॥ १७७ ॥
सोऽप्याचख्यौ स्वनियमं भूपोऽस्मै मुदितस्त्वदात्। कोशाध्यक्षपदं वृत्तिं व्यधाच्चातिगरीयसीम् ॥१७८॥
राजमान्यो महर्द्धिश्च जज्ञेऽसौ संमतो जने। कालेन मृत्वा चन्द्राभापुर्यां पुण्यानुभावतः ॥ १७९ ॥
पुरन्दरमहेभ्यस्य सतीभार्यातनूद्भवः। सिद्धदत्ताह्वयः प्राज्ञः कलावान् विश्रुतोऽभवत् ॥ १८० ॥ ( युग्मम् ).
इतः स वसुदत्तोऽपि तथा कूटतुलादिना। दुराजीविकया मृत्वा कालेन विधियोगतः ॥ १८१ ॥
वङ्गालसन्निवेशेऽभूत् कपिलाह्वो द्विजाङ्गजः। पितरौ निधनं प्राप्तौ तस्याभाग्यनियोगतः ॥ १८२ ॥ ( युग्मम् ).
क्रमात् क्षीणपितृधनं स्वजनाः पर्यणाययन्। कस्यापि दुर्विधस्यामुं कन्यां रूपादिदूषिताम् ॥ १८३ ॥
निर्भर्त्स्यमानो गेहिन्या दौस्थ्याद् देशान्तरं गतः। श्रिये कुकर्मभिः क्लिश्यन्नुक्तः कार्पटिकेन सः ॥१८४॥
धनार्थी यदि तद् गच्छ चन्द्राभापुरि देवताम्। आराधयाशाकरणीं द्रुतं येनेष्टमाप्नुयाः ॥ १८५ ॥
श्रुत्वेति गत्वा तत्रासौ शुचिरेकाग्रमानसः। न्यषीदत् पुरतो देव्याः कुशसंस्तारकोपरि ॥ १८६ ॥

तृतीयस्यां निशि प्रोक्तो देव्योत्तिष्ठासि किं स्थितः ?। सोऽवग् याचे धनं देवी प्राह किं देयमस्ति ते ? ॥ १८७ ॥
पुनस्तां वाडवोऽवोचत् प्राणांस्त्यक्ष्यामि तन्निजान्। तवैव देवि ! भवने लप्स्ये न स्वेप्सितं यदि ॥ १८८ ॥
देवी तन्निश्चयं ज्ञात्वाऽवदत्तिष्ठाऽस्ति पुस्तकम्। विक्रीय तत् पञ्चशतीं लप्स्यसे स तथा व्यधात् ॥ १८९ ॥
भ्राम्यंस्तद्विक्रयायागात् सिद्धदत्तस्य सन्निधौ । स द्विजन्मा पुस्तकं तत् तस्यादर्शयदुत्सुकः ॥ १९० ॥
मूल्ये प्रोक्ते सिद्धदत्तोऽवाचयत् तत् सकौतुकम्। आदौ वृत्तस्य पाद चापश्यदेतं हि तद् यथा ॥१९१॥
" प्राप्तव्यमर्थं लभते मनुष्यः " इति ।
तदर्थं परिभाव्यैष गृहीत्वा पुस्तकं ददौ । तस्मै पञ्चशतीं सोऽप्यादायागात् स्वपुरं प्रति ॥ १९२ ॥
आगच्छन्नन्तरा भिल्लैर्नीत्वा वन्दीकृतश्चिरम्। कदर्थयित्वा मुक्तश्च क्लेशादापन्निजं पुरम् ॥ १९३ ॥
इतश्च सिद्धदत्तोऽपि पित्रा पञ्चशतीव्ययात्। रुष्टेन पुस्तकयुतो निरकाशि स्वमन्दिरात् ॥ १९४ ॥
निर्गतो निशि सिद्धोऽपि पिहिते पुरगोपुरे। जीर्णदेवकुले सुप्तस्तत् पद्यं ह्यचिन्तयत् ॥ १९५ ॥
तस्यां पुर्यामथो भूपमन्त्रिश्रेष्ठिपुरोधसाम्। मिथः प्रेमपराः कन्या आलपन्नन्यदेति ताः ॥ १९६ ॥
वालभावादियत्कालमभत् संयोगजं हि नः। शर्मेदानीं भविष्यामस्तारुण्ये विरहातुराः ॥ १९७ ॥
अथ भूपतिपुत्र्याख्यत् सख्यः! शृणुत मद्गिरम्। यावत् केभ्योऽपि नो दद्युः पितरोऽद्यापि नोद्यताः ॥१९८॥

तावत् कुमौं त्रिवोढारं सर्वाः संभूय कञ्चन। यथा न नो वियोगाग्निर्दहत्येष हृदि स्थितः ॥ १९९ ॥ ( युग्मम् ).
तथेत्यङ्गीकृते ताभिराह्वाय्य नृपकन्यया। राजपुत्रः कोऽपि जात्यो विज्ञप्तो भर्त्ततात्रिधौ ॥ २०० ॥
यावन्न स्वीकरोत्येष तावत् ताः स्ववधोद्यताः। भयात् सोऽपि प्रपेदे तत् स्त्रीभिः कस्को न वाह्यते ? ॥ २०१ ॥
श्वेताष्टम्यां निशि स्वामिन्! जीर्णदेवकुले त्वया। चतुरेण चतस्रोऽपि विवाह्याः कन्यका वयम् ॥ २०२ ॥
इत्युक्तस्ताभिरेषोऽपि चिन्तासागरमग्नहृत्। निरूपितदिनेऽस्मिन् सोऽचिन्तयच्चेति चेतसि ॥ २०३ ॥
स्वामिद्रोहेण समलं कुलं कुर्वे कथं निजम् ?। विमृश्येति पुरात् सायं निरीहो निर्ययौ जवात् ॥ २०४ ॥
आगाद् राजसुताऽऽदत्तविवाहोपस्करा निशि। देवौको वीक्ष्य सुप्तं तं सिद्धपुत्रं च साऽवदत् ॥ २०५ ॥
किं देव! निश्चिन्ततया सुप्तोऽसीति विबोध्य तम्। गान्धर्वेण विवाहेनाकारयत् पाणिपीडनम् ॥२०६॥
नृपपुत्र्याह मे नाथापूरयस्त्वं यथेप्सितम्। तिसृणामपि कन्यानां पूरणीयं तथाऽर्थितम् ॥ २०७ ॥
क्व पुनर्वाहनं येन गम्यतेऽन्यत्र संप्रति। सोऽवग् भावीष्टमखिलं श्रान्तो निद्रामि संप्रति ॥ २०८ ॥
स्यान्नायं किं स इत्याप्तशङ्का यावद् व्यलोकयत्। तं राजतनया तत्र प्रदीपोद्योतनात् तदा ॥ २०९ ॥
सुरूपं सुभगं वीक्ष्य तं च तत्पुस्तकं च सा। संवाच्य वृत्तपादं तं सत्यमित्यालपन्त्यसौ ॥ २१० ॥
तिसृणामपि जामीनामथ प्रत्ययहेतवे। कज्जलेन द्वितीयं तत्पादमित्थं च साऽलिखत् ॥ २११ ॥

एवमेष सुखसंपदुपेतं जीवितं समनुपाल्य गुरुभ्यः ।
प्राग्भवीयचरितं विनिशम्यादाय संयममवाप शिवं च ॥ २२१ ॥
वाडवोऽपि कपिलो गृहचिन्ताभ्रष्टधर्मविभवो विगताशः ।
भ्रान्तवान् गुरुचतुर्गतिषूच्चैः प्राप्नुवन् जननमृत्युशतानि ॥ २२२ ॥
इत्थं तृतीयव्रतपालनेन श्रीसिद्धदत्तः समवाप सौख्यम् ।
तद्वैपरीत्येन दुरन्तदुःखमवाप नित्यं कपिलो द्विजन्मा ॥ २२३ ॥

इति तृतीयाणुव्रते सिद्धदत्तकपिलकथा ।

मत्वेत्यदत्तविरताविरतानां गुणागुणान् । पालनीयं प्रयत्नेन तत् तृतीयमणुव्रतम् ॥ २२४ ॥
श्रुत्वेति दयिताः प्रोचुर्मम ता भगवन्निदम् । अस्माभिरपि नादेयमदत्तं जातु कस्यचित् ॥ २२५ ॥
स्वसद्मगतमप्येतत् पतिद्रव्यश्च नेन च । अणु वा बहु वाऽदत्तं नादास्यामो ह्यतः परम् ॥ २२६ ॥
श्रुत्वेत्यहं हितकरं ममैवैतद् विभावयन् । अस्तमन्युः क्रमाद् यष्टी द्वे द्वे दास्ये मुमुक्षवे ॥ २२७ ॥
ध्यायन्निति स्थितो यावदस्मि तत्रैव निश्चलः । स मुनिर्व्याहरत् तावद् वर्यं तुर्यमणुव्रतम् ॥ २२८ ॥ ( युग्मम् ).
सच्छीलधारिणीनां स्त्रीणां विषविषधराग्निवैरिगणाः । न प्रभवन्ति प्रायो वशीभवेद् दैवतगणोऽपि ॥ २२९ ॥

शीलभ्रष्टानां पुनरिहैव कर्णौष्ठनासिकाच्छेदः। धनबन्धुविप्रयोगः स्यादयशश्चापि जन्तूनाम् ॥ २३० ॥
सच्छीलपालनादिह सुखमापच्छीलसुन्दरी नारी। दुर्ललितास्तु कुशीलाः पेतुः संसारकान्तारे ॥२३१॥
तद्यथा—विदेहेऽत्रैव विजये पुरे विजयवर्द्धने। वसुपालाभिधः श्रेष्ठी वसुमाला च तत्प्रिया ॥ २३२ ॥
रूपलावण्यशीलादिगुणालङ्कारभूषिता। सुन्दरीति तयोर्नाम्ना सुताऽभूत् परमार्हती ॥ २३३ ॥
तरुणैः प्रार्थ्यमानापि सा तारुण्यमधिश्रिता। ददे पित्रा सुभद्राख्यश्रावकायैव तत्पुरि ॥ २३४ ॥
अन्यदा द्वौ वणिक्पुत्रौ भट्टपुत्रावुभावपि। सुन्दर्या रूपमाहात्म्यं श्रुत्वा चत्वार एव ते ॥ २३५ ॥
एकाग्रमनसो भूत्वा सुन्दरीसङ्गमिच्छवः। कुर्वन्ति विविधोपायान् कलाकेलिवशंवदाः ॥ २३६ ॥ ( युग्मम् ).
तथा च—विहिताद्भुतशृङ्गारास्ते तिष्ठन्ति तदध्वनि। विचित्राः प्राहुरन्योक्तीर्गीतं गायन्ति मञ्जुलम् ॥ २३७ ॥
इत्थं विविधचेष्टाभिरपि ज्ञाततदाशया। शीललीलावती सुन्दर्यपश्यन्न दृशापि तान् ॥ २३८ ॥
ततो मोघश्रमास्तेऽमी श्रिया कामपि तापसीम्। वशीकृत्य प्रजिघ्युर्द्राक् सुन्दरीनिकटेऽन्यदा ॥ २३९ ॥
बहुशोऽप्युपसर्पन्ती सा तद्वेश्मनि तापसी। सम्यग्दृशा दृशाऽप्येषा न सुन्दर्या विलोकिता ॥ २४० ॥
तथाऽपि धृष्टयाऽभाणि परिव्राजिकयाऽन्यदा। सुन्दरी सखि! विज्ञाऽसि तथाऽपि शृणु मद्वचः ॥२४१॥
धर्मो जिनैर्निगदितः सर्वासुमतां दयाविधानेन। तद् दुःखितेषु सुन्दरि! कुरु तेषु दयां प्रयत्नेन ॥२४२॥

ततः श्रुत्वेति सुन्दर्या सख्याचख्ये हला ! इदम् । महापातकमुच्चैर्यत् प्रतिपन्नव्रता अपि ॥ २४३ ॥
वितरन्ति परेषां ये पापबुद्धिं गतत्रपाः । क्षपन्ति परमात्मानमपि ते चोग्रदुर्गतौ ॥ २४४ ॥ ( युग्मम् ).
श्रुत्वेति तापसी ज्ञातनिश्चया तानदोऽवदत् । चेज्जिजीविषवो यूय तदमुं मुञ्चताग्रहम् ॥ २४५ ॥

तथाऽपि तेऽत्यक्तकदाग्रहग्रहा आराधयन् कञ्चन मन्त्रवेदिनम् ।
स तानथो कृष्णचतुर्दशीनिशि प्रेतौकसि प्रापयदुल्लसत्कुधीः ॥ २४६ ॥

तत्र मण्डलमालिख्य विहितैकाग्रमानसः । जजाप मन्त्रसिद्धोऽसौ विधिवन्मन्त्रदेवताम् ॥ २४७ ॥
तन्मन्त्राचिन्त्यमाहात्म्यादथ सा कृतपौषधा । सुप्ता तत्र समानिन्ये मन्त्रसिद्धेन सुन्दरी ॥ २४८ ॥
सुन्दर्यास्तत्तथा तेजोऽसहमाना महाश्रियः । आः किमीदृक्पापकर्मण्यभियुक्तास्मि संप्रति ॥ २४९ ॥
मुहुर्मुहुर्मन्त्रसिद्धं वदन्तीति पुरः स्थिता । तदा कोपकरालाक्षी तिरोऽधान्मन्त्रदेवता ॥ २५० ॥ ( युग्मम् ).
सुन्दरी दीपिकोद्योतात् पश्यन्ती सर्वतो वनम् । हा किमेतदिति प्राप्तविस्मयोद्भ्रान्तलोचना ॥ २५१ ॥
नमस्कृतिस्मृतिपरा यावत् तिष्ठति तत्र सा । तावत्तांश्चतुरो मन्त्रसिद्धोऽवादीन्मुदान्वितः ॥ २५२ ॥ ( युग्मम् ).
भोः ! आनीतास्त्यसौ युष्मद्दयिता विद्यया मया । अथ यद्रोचते वस्तत् कुरुत प्रथितादराः ॥ २५३ ॥
मिथस्तेऽप्यवदन् योऽत्र प्रागमूं स्प्रक्ष्यति प्रियाम् । आदौ रन्ता स एवेति कृतसङ्केतनिश्चयाः ॥ २५४ ॥

शीलव्रतापालनपालनेषु दोषान् गुणांश्चापि विभाव्य सम्यक् ।
गुरूपदेशाद् जगृहुः स्त्रियस्ताः परस्य पुंसो नियमं तदानीम् ॥ २६७ ॥

इति चतुर्थव्रते शीलसुन्दरीकथानकम् ॥

श्रुत्वेत्यहमपि हितकरमेतन्मे यत्प्रशान्त ईर्ष्याग्निः । जाता परा च निर्वृतिरधुना तद्यष्टिमेकैकाम् ॥२६८॥
दास्यामि मुनिवरायेति चिन्तयन् यावदस्मि तत्रस्थः । तावन्मुनिरप्यगदत् परिग्रहप्रमितिनियममसौ॥२६९॥ ( युग्मम् ).
परिग्रहस्य ये धीराः प्रमाणं हि वितन्वते । भवाब्धिरपि तेषां स्यात् प्रमितः सुकृतात्मनाम् ॥ २७० ॥
नवधा धनधान्यादावल्पीयसि परिग्रहे । चिन्ताऽल्पैव हि सा गुर्वी भवेत् तस्मिन् गरीयसि ॥ २७१ ॥
भूयो मज्जेद्भवाम्भोधौ लोभभाराभिभूतहृत् । संतोषामृतसिक्तानां दूरं दुःखानलो व्रजेत् ॥ २७२ ॥
परिग्रहानिवृत्तास्तु क्लेशायासाननेकधा । सहन्ते शीतवातोष्णक्षुत्तृट्पीडादिसंभवान् ॥ २७३ ॥
कृतेच्छापरिमाणो हि गुणाकर इवोदयम् । लभते चेतरो दुःखं वणिग्गुणधरो यथा ॥ २७४ ॥
जयस्थलाह्वये ग्रामे वणिजौ भ्रातराविह । उभौ विष्टसुविष्टाह्वावभूतां स्नेहलौ मिथः ॥ २७५ ॥
ज्येष्ठो विष्टो जनेऽनिष्टो व्यवहारपराङ्मुखः । न सत्करोति स्वजनान्नातिथींश्च दुःखितान् ॥२७६॥
सहतेऽहर्निशं क्लेशं विभवार्जनहेतवे । निन्द्यमानोऽर्थिभिः कालं गमयत्यतिदुःखितः ॥ २७७ ॥

स्वजनार्थिजनार्थितम् ॥ २७८ ॥
सुविष्टः पुनरौचित्यवृत्तिः सर्वत्र बुद्धिमान् । पूरयेत् कल्पशाखीव स्वजनार्थिजनार्थितम् ॥ २७९ ॥
क्षमर्षिरन्यदा तेन प्रत्यलाभि गृहागतः । मनोज्ञाशनपानाद्यैर्बहुमानपुरःसरम् ॥ २८० ॥
भोगभूमिमनुष्यायुर्निबद्धं तेन तत्र च । विहस्येपत्पुनर्विष्टश्चिन्तयामास मानसे ॥ २८१ ॥
व्यवसायाक्षमा एते अहो! पाखण्डिनोऽन्वहम् । मुष्णन्ति परधिष्ण्यानि तेभ्यो दत्तेन किं मुधा ॥२८२॥
इति दानान्तराय स नीचैर्गोत्रं च बद्धवान् । पप्रच्छ विष्टो दक्षामूनन्यदा खन्यवादिनः ॥ २८३ ॥
अवोचस्ते गिरेरस्य नितम्बेऽस्ति महानिधिः । परं तद्ग्रहणे नास्ति सामग्री नः कियत्यपि ॥ २८४ ॥
विष्टोऽवक् तामहं सद्यः प्रापयिष्येऽथ तेऽवदन् । यद्येवं तद्वयं भाग दास्यामस्ते यथोचितम् ॥ २८५ ॥
निश्चित्येति प्रशस्तेऽह्नि विष्टो वित्तव्ययेन सः । वलिपूजादिसामग्रीमप्यव्यग्रमना व्यधात् ॥ २८६ ॥
ततो गतो नितम्बेऽद्रेः समं तैः खन्यवादिभिः । दर्शितस्तैः पलाशस्य पादस्तस्मै भुवं गतः ॥ २८७ ॥
उक्तं च—न स्यादक्षीरवृक्षस्य प्ररोहो विभवं विना । बहुरूपं वा भवेद् द्रव्यं ध्रुवं बिल्वपलाशयोः ॥ २८८ ॥
तद्दृष्ट्वा विष्ट आचष्ट स्पष्टमेतानदुष्टधीः । प्राप्तो निधिः परं स्वर्णमण्यादि स्यात् किमत्र भोः! ॥ २८९ ॥
तेऽवोचंश्चेद्रसः पादाद्रक्तो निर्याति तद् ध्रुवम् । मणयः काञ्चनं पीते श्वेते श्वेतं तु लभ्यते ॥ २९० ॥
पादच्छेदे रसं रक्तं ज्ञात्वा पूजोपहारतः । तुष्टैः कृष्टो निधिस्तैश्चादिष्टो विष्टो निजेष्टकृत् ॥ २९० ॥

आनयामो नयामो यन्निधिं निशि तवौकसि । लुब्धहृत् मुग्धधीश्चैष तदर्थमगमत् पुरम् ॥ २९१ ॥
परेऽपि रत्नान्यादाय पलायाञ्चक्रिरे रयात् । विष्टस्तत्रागतस्तानन्नीक्षमाणो विषादभाक् ॥ २९२ ॥
पपात मूर्च्छितः पृथ्व्यां भूपोऽपि तदवेत्य तम् । भृत्यैरानाय्य सर्वस्वापहाराद् निरवासयत् ॥ २९३ ॥
ततोऽप्युन्मादवान् कश्चित् कालं स्थित्वा मृतस्ततः । सारमेयोऽभवच्चाऽथ वृषभुक्कर्मदोषतः ॥ २९४ ॥
विशन् महानसं सूपकृता सोऽपि हतस्ततः । अभूद् दरिद्रमातङ्गो मृत्वा रत्नप्रभामगात् ॥ २९५ ॥
न्यायनिष्ठः सुविष्टस्तु त्रिवर्गमनुपालयन् । मृत्वोत्तरकुरौ जातो युग्मजन्मा नरोत्तमः ॥ २९६ ॥
देवर्द्धितुल्यं तत्राऽपि सुखं भुक्त्वा गतो दिवम् । ततश्च्युत्वाऽत्र विजये ग्रामे जयस्थलाभिधे ॥ २९७ ॥
वणिजः पद्मदेवस्य देवकीकुक्षिसंभवः । नाम्ना गुणाकरः पुत्रो जातोऽशेषगुणाकरः ॥ २९८ ॥ ( युग्मम् ).
इतश्च विष्टजीवोऽसावुद्धृत्य नरकात्ततः । धनञ्जयस्य वणिजो जयाजायासमुद्भवः ॥ २९९ ॥
पुत्रो गुणधराभिख्यः प्राग्भवप्रेमवारिणा । सिक्ता वृद्धिमती चासीत् तयोः प्रीतिलता मिथः ॥ ३०० ॥ ( युग्मम् ).
अन्यदा जाततारुण्यौ तौ धनार्जनतत्परौ । उद्याने धर्मदेवाख्यमृषिं गत्वा प्रणेमतुः ॥ ३०१ ॥
पप्रच्छतुर्धनोपायमनगारं च तौ तदा । सोऽप्याख्यद् धर्म एवैकः स्याद् धनार्जनकारणम् ॥ ३०२ ॥
यद्यपि कृतसुकृतभरः प्रयाति गिरिकन्दरान्तरेषु नरः । करकलितदीपकलिका तथापि लक्ष्मीस्तमनुसरति ॥३०३॥

तथा च—अकृतसुकृतस्य न सुखान्यतप्ततपसो न चेष्टसिद्धिश्च । नाशीलवतो महिमा नहि मोक्षो मूढहृदयस्य ॥३०४॥

अन्यच्च—लोभाभिभूतपुरुषः सत्यपि विभवे न तोषमुपयाति । दत्त्वा चरणौ धनिनां च शिरसि शेते प्रसन्तुष्टः ॥३०५॥

उपर्युपरि संपश्यन्निन्द्रोऽपि द्रमकायते । सन्तोषामृतसिक्तात्मा रङ्कोऽपि श्रीपतीयति ॥ ३०६ ॥

शक्यते सर्वथा नो चेन्मोक्तुं धान्यधनादिकम् । पुण्यवद्भिस्तथापीच्छापरिमाणं विधीयते ॥ ३०७ ॥

श्रुत्वेति शुद्धसम्यक्त्वप्रतिपत्तिपुरस्सरम् । गुणाकरोऽग्रहीदिच्छापरिमाणं मुनेर्गिरा ॥ ३०८ ॥

इतरोऽश्रद्दधानस्तन्नानुमेनेऽपि चेतसा । भूरिलोभाभिभूतः स दध्यौ गुणधरोऽप्यथ ॥ ३०९ ॥

मन्यते कृतकृत्यं स्वमल्पीयस्या श्रियाऽपि यः । क्रुद्धो विधिस्तदधिकां तस्मै दत्ते नहि श्रियम् ॥ ३१० ॥

तथ्यमिदमन्यथा कथमद्भुतभुजवीर्यशालिनोऽप्यस्य । त्वरितं मनोमनोरथ इह सङ्कुचितोऽधुना नियतम् ॥३११॥

एवं तौ सदसद्भावैर्मुनिं नत्वा गतौ गृहम् । गुणाकरमनापृच्छ्यान्यदा गुणधरस्तु सः ॥ ३१२ ॥

आदायागण्यपण्यानि गत्वा देशान्तराण्यसौ । उपार्ज्य भूरिविभवं निवृत्तः स्वगृहं प्रति ॥ ३१३ ॥

प्राप्तो महाटवीं तावदज्वलद् ज्वलनो वने । नेशुर्भियाऽभितो भृत्या भस्मीभूतान्यनांसि च ॥ ३१४ ॥

नष्टः कथमपि क्षुत्तृट्पीडार्त्तः सप्तरात्रतः । ग्रामं कमप्यगात् तत्र ददृशे लिङ्गिनाऽन्यदा ॥ ३१५ ॥

नीत्वा निजालयं तेन प्राणवृत्तिं च कारितः । ज्ञातवृत्तेन चानायि नितम्बे कस्यचिद् गिरेः ॥ ३१६ ॥

दर्शयित्वौषधीं काञ्चिद् भणितो लक्षयस्व भोः! । एतां संप्रति यद् रात्रौ ग्राहयामि त्वयाऽनघ! ॥ ३१७ ॥
लिङ्गिना पुनरूचेऽसौ निशि भोस्तां महौषधीम् । ज्वलन्तीं सर्वतो वीक्ष्य दीप्रदीपशिखामिव ॥ ३१८ ॥
गृहीत्वा वामहस्तेन छित्त्वा चैतामुपर्यधः । दृढमुष्टितया पृष्ठे त्यजन् दृष्टिं त्वमेहि भोः! ॥ ३१९ ॥ ( युग्मम् )
कुर्वे येनादरिद्रं त्वां प्रतिपद्येति तद्वचः । औषधीं विधिवल्लात्वा प्रत्यागच्छन्नथ द्रुतम् ॥ ३२० ॥
गिरिशृङ्गपतद्ग्रावखटत्काररवेण च । सहसाऽऽलोकयत्पृष्ठे तावन्नष्टौषधी करात् ॥ ३२१ ॥ ( युग्मम् )
निवेदितश्च वृत्तान्तो यथास्थस्तेन लिङ्गिनः । सोऽवग् भद्रास्ति सत्त्वं ते न पुनः पुण्यसञ्चयः ॥ ३२२ ॥
तद् भोः! व्रज निजं स्थानं भज सन्तोषमञ्जसा । तद्गिरं सोऽवधार्याथामिलत् कस्यापि लिङ्गिनः ॥३२३॥
सोऽपि प्राह क्वापि वत्स ! रक्तक्षीरस्नुहीतरुम् । विलोकय च्छिनद्ध्येष दारिद्र्यं येन तत्क्षणात् ॥३२४॥
लब्धस्तेन स्नुहिस्तादृक् ज्वालितो लिङ्गिनाऽग्निना । क्षिप्तो गुणधरस्तत्र प्रसह्यैव हि तेन सः ॥ ३२५ ॥
निरगात् स लघुत्वेन तं प्रक्षेप्तुमथोद्यतः । एवं तयोर्विरोधे चागमत् तत्र नृपाङ्गजः ॥ ३२६ ॥
ज्ञातवृत्तो गुणधरात् स कुमारोऽपि कौतुकात् । अक्षिपल्लिङ्गिनं तत्र सञ्जातः स्वर्णपूरुषः ॥ ३२७ ॥
जग्राह तं नृपसुतो दत्त्वा किमपि काञ्चनम् । विसृष्टोऽसौ गुणधरश्चलितः स्वपुरं प्रति ॥ ३२८ ॥
अमिलत् पथि कोऽप्यस्य मन्त्रसिद्धो महान्नरः । गोष्ठीं मिष्टां मिथस्तौ द्वौ कुर्वन्तौ क्वापि तस्थतुः ॥३२९॥

श्रुत्वेति सम्यग् विरताविरतानां परिग्रहात् । गुणदोषांश्च जगृहुस्ता इच्छाप्रमितिं प्रियाः ॥ ३४१ ॥
अहं च हा मुधैतस्मिन्महाव्रतधरे मुनौ । विरूपं ध्यातवानित्युत्पन्नानुशयमानसः ॥ ३४२ ॥
पतितो मुनिपादेषु पापाभिप्रायमात्मनः । प्रकाश्य क्षमयित्वा च मुनिपं तं व्यजिज्ञपत् ॥ ३४३ ॥ ( युग्मम् )
भगवन् ! हास्यवाचाऽपि यद्विष्टेन सुदारुणम् । दुःखमाप्तमहं भावी तत् कथं द्वेषदूषितः ? ॥ ३४४ ॥
सोत्साहं मुनिरप्याह महापापमिदं खलु । यन्महर्षिषु विद्वेषचिन्तनं मनसाऽप्यहो ! ॥ ३४५ ॥
चारित्रमन्तरेणैतन्न च्छेत्तुं पार्यते बुधैः । भानवो भानवीया यत् क्षमा ध्वान्तान्तहेतवे ॥ ३४६ ॥
अन्यच्च—संसारासारतां सम्यग् विचारय विभावय । कामभोगांश्च विरसावसानान्निजमानसे ॥ ३४७ ॥
तद् भोः ! अशाश्वतासारसंसारसुखमुत्सृजन् । शाश्वतैकान्तसौख्यस्य निदानं श्रय संयमम् ॥ ३४८ ॥
श्रुत्वेत्यमृतमाधुर्यधुर्यां मुनिपतेर्गिरम् । क्षणान्मोहविषं नष्टं प्रबुद्धं ज्ञानलोचनम् ॥ ३४९ ॥
ततः प्रणयिनीः सर्वाः प्रबोध्य शुभया गिरा । धर्मदेवगुरूपान्ते प्राव्रजं प्रेयसीयुतः ॥ ३५० ॥
पादाब्जमूले तस्याहं तपस्यन्ननिशं क्रमात् । गुणसंपदमीदृक्षां तेन संप्रापितोऽधुना ॥ ३५१ ॥
नमोऽस्तु गुरवे तस्मै महिमाद्भुतसंविदे । अश्मोपमोऽपि येनाहं वन्दनीयः कृतो जने ॥ ३५२ ॥

श्रुत्वेति सूरिचरितं नृपसिंहसेनश्चित्रीयमाणहृदयो मुनिदर्शनेन ।
पुण्यात्मनां प्रवरमभ्युपमन्यमानः स्वं संस्तुवंश्च मुनिपं विविधैर्वचोभिः ॥ ३५३ ॥
राज्यं वितीर्य तनयाय दिने प्रशस्ते भावाम्बुशोधितमनोमलनिष्कलङ्कः ।
त्यक्त्वाऽखिलां श्रियमिमां तृणवत्प्रपन्नश्चारित्ररत्नममलं शिवसौख्यमूलम् ॥ ३५४ ॥
भूपोऽपि पूर्णचन्द्रः सम्यक्त्वाणुव्रताधिगममुदितः । जनताः पाति पितेव प्रसृमरगुणभासुरः श्रीमान् ॥३५५॥
नमयति वैरिस्तोमं दमयति दुष्टान्नयाध्वना युक्तः । पालयति दीननिकरं सुहृद्गणं चोपकुरुते यः ॥३५६॥
अथ पुष्पसुन्दरी देव्यपि सम्यक्त्वान्वितव्रताधिगमा। जिनवरवचनसुधारसहृतभवतृष्णा जयत्यनिशम् ॥३५७॥
पञ्चविधानिति विषयाननुभवतोरिह तयोः कियति काले। वीरोत्तराभिधोऽभूत् तनयो विनयोज्ज्वलः श्रीमान् ॥३५८॥
युवराज्ञि कृते तस्मिन् श्रुत्वा निर्वाणमथ पितुर्नृपतिः । हर्षविषादोपेतो विभावयामास मनसीति ॥ ३५९ ॥
धन्यो महानुभावो महामुनिर्मम पिता महासत्त्वः । सुखलालितोऽपि योऽसाधयत्तरां दुष्करं कार्यम् ॥ ३६० ॥
अहमेषकोऽल्पसत्त्वः पापासक्तस्तपःक्रियाऽशक्तः । विषयामिषप्रसक्तो जरामवाप्तोऽपि गततत्त्वः ॥ ३६१ ॥
जानामि यच्चला श्रीश्चलमायुर्दुःखहेतवः कामाः । नियतवियोगाः स्वजनास्तथापि धर्मे प्रमाद्यामि ॥ ३६२ ॥
इति चिन्तावान् भणितः प्रियया किं देव! शोचनेनात्र?। सत्त्वोद्योगसहायाः पुरुषाः कार्योद्यता यत् स्युः ॥३६३॥

तज्जहिहि राज्यचिन्तां ब्रह्मव्रतमाभजस्व निःशङ्कम् । सुरसुन्दराह्वसुगुरुर्यावदिहायाति गुणसिन्धुः ॥३६४॥
साधूक्तमिति भणन् स्वाङ्गजाय राज्यं वितीर्य वर्यगुणः। त्यक्तसमस्तममत्वः सोऽस्थाद् गुरुसङ्गमाकाङ्क्षी ॥३६५॥

देव्यप्युदग्रतपसा किल भासुराङ्गी तस्थौ सुधर्ममलं परिपालयन्ती ।
आकस्मिकी रुगथ जातवती नृपस्य दध्यौ तदर्त्तिविधुरो नृपतिस्तदेति ॥ ३६६ ॥

धन्यास्ते ग्रामपुरारामास्तिष्ठन्ति येषु मे गुरवः । भावि किमहोऽपि तदहो! यत्र भजेऽहं गुरुपदाब्जम् ॥३६७॥

विभावयन्नेष इति स्वचित्ते आयुःक्षयान्मुक्तकषायदम्भः ।
समाधिना मृत्युमवाप्य कल्पं संप्राप्तवानारणनामधेयम् ॥ ३६८ ॥

तत्रैव देव्यपि जगाम सुरत्वमेवमेकत्र तौ सुखमनुत्तरमन्वभूताम् ।
प्रेमानुबन्धरसिकौ विशदे विमाने प्राक्पुण्यसञ्चयवशाद् बहुसागराणि ॥ ३६९ ॥

इति पं० श्रीसत्यराजगणिविरचिते श्रीपृथ्वीचन्द्रचरिते पूर्णचन्द्रश्रमणोपासकचरितं
पञ्चमं भवग्रहणम् ।

## षष्ठो भवः ।



पुण्यानुबन्धिपुण्यप्रभावतस्तावथो सुरर्द्धिसुखम् । भुक्त्वा च्युत्वा च ततो यत्रोत्पन्नौ शृणुत तद्दतः ॥ १ ॥
अस्ति विदेहजनपदे मिथिलापुर्यां भुजौजसा सिंहः । नरसिंहनामनृपतिः स्वयशोभरधौतदिग्वलयः ॥ २ ॥
तस्याद्भुतगुणशाला सुकृतविशाला शिरीषसुकुमाला । देवी गुणमालाऽऽख्या चन्द्रकलानिर्मला वाला ॥ ३ ॥
परिपूर्णमहाभोगामपराक्रान्तां भुवं प्रणयिनीं च । सममनुभवन्नसमयं समयं तं वेद भूमीशः ॥ ४ ॥
भूपोऽन्यदाऽऽप्तपुंसा विज्ञप्तो देव ! यदिह पूर्वाप्याम् । पौरस्त्रीणां शुश्रावालापमहं जगादेति ॥ ५ ॥
जीयान्नरसिंहनृपोऽन्याऽऽख्यत् सखि! नैष भवति नरसिंहः । किन्तु नरजम्बुकोऽयं यदुदास्ते पुत्रहीनोऽपि ॥६॥
श्रुत्वेति चित्रवार्त्तां भूपोऽथापृच्छदङ्गजोपायम् । सचिवांस्तेऽप्याहुरिदं कश्चिद्योगीह देवोऽस्ति ॥ ७ ॥
स च साधको जनेष्टं दत्तेऽद्भुतडम्बरः स पुत्रार्थे । पृष्टव्यो भूपतिनाऽप्याहूतोऽयं सबहुमानम् ॥ ८ ॥
पृष्टश्च सविनयं भोः! योगिन्! सामर्थ्यमस्ति ते कीदृक्?। ईषद्विहस्य सोऽप्याचख्यौ नृप! कार्यमादिश मे ॥९॥

किं नागवधूरथवा देववधूरानयामि वशमधुना ? । किं वाऽवनिं सार्णवां नयामि द्राक् तवाङ्घ्रितले ? ॥ १० ॥
गजवाजिवृन्दमथवा किं दूरादानयामि चान्यदपि ? । विषमं प्रयोजनं भण यत् संप्रति साधयाम्येषः ॥ ११ ॥
अवदद् नृपोऽपि योगिन्नानय नागाङ्गनां यदसि शक्तः । सोऽप्यानिनाय तामपि धृत्वा ध्यानं क्षणादेव ॥१२॥
सा योगिनः पुरस्तात् स्थिताऽऽख्यदादिश विभो ! प्रकुर्वे किम् ? । सोऽप्याचख्यौ कुरु नरवरस्य गिरमिति तदादिष्टा ॥१३॥
एत्य नृपमादिश विभो ! जल्पन्ती भाषितेति सा राज्ञा । का त्वं किमिहायाताऽसि ? वाऽत्र साऽवोचदिति तं च ॥ १४ ॥
नागेश्वरदयिताऽस्म्यहमादेशाद् योगिनोऽत्र चायाता । अथ विस्मितेन राज्ञाऽप्यसौ विसृष्टा तिरोधत्त ॥ १५ ॥
माहात्म्यमहो ! योगीन्द्र ! तेऽद्भुतं जल्पतेति भूपेन । ऊचे कार्यं सोऽप्याख्यत् कृष्णचतुर्दशीरात्रौ ॥ १६ ॥
एकान्त्येव सहायो भव येन ज्वालिनीं महाविद्याम् । आराध्य पुत्ररत्नं सर्वेष्टं दापये चान्यत् ॥ १७ ॥
मन्त्रिभिरूचे राजन् ! भव्य उपायस्तथापि नास्य मनाक् । विश्वस्तव्यं यदिह स्याच्चित्रचरित्रभृत् प्राणी ॥१८॥
प्रतिपद्य मन्त्रिवचनं तदुपान्ते निश्चितेऽह्नि निशि भूपः । प्राप्तोऽसियुक् श्मशानं योग्यपि तत्रागतश्च तदा ॥१९॥
संमार्ज्य भुवं योगी चिताऽग्निदीपेन मण्डलालेखम् । कुर्वन् जगाद नृपतिं वटद्रुमो दक्षिणेनेतः ॥ २० ॥
उद्बद्धः शाखायां तस्य नरो यस्तमानयास्तभयः । न च तस्मै दातव्यं प्रतिवचनं जल्पतेऽपि गिरम् ॥ २१ ॥
आरुह्य स वटविटपं छित्त्वा पाशं च यावदुत्तीर्णः । तावत् तथैव तं तरुशाखास्थं पश्यति नृनाथः ॥ २२ ॥

एवं द्विस्त्रिः कुर्वंस्तथैव शाखागतं तमथ भूपः । छित्त्वा पाशं सहसा तं शवमादाय च निवृत्तः ॥ २३ ॥
तमवोचद् वेतालः किं मुक्त्वा मूढ ! वीरवृत्तं स्वम् । कुर्वन् कुकर्म रक्षांस्यनुवदसि निशि भ्रमंश्चैवम् ॥ २४ ॥
भूतबलिः क्रियसे त्वं दुष्टेनानेन चेन्न मुञ्चसि माम् । अक्षुब्धमनाः श्रुत्वेति भूपतिः पुनरनेनोचे ॥ २५ ॥
भोः ! साधु साहसं ते प्रतिपन्नविनिश्चयश्च हे वत्स ! । तुष्टो भणामि तदिदं पुत्रेच्छुस्त्वं तु दुष्टोऽयम् ॥ २६ ॥
दत्त्वा त्वद्देहबलिं मां साधयितुं समीहते तस्मात् । मा क्लिश्यसि यत् सूनुर्भविता ते सप्तरात्रान्तः ॥ २७ ॥ ( युग्मम् )
प्रतिपन्नपालनाय च नय मृतकं तत्र पुनरसि दद्याः । नार्थयतेऽप्यस्मै यन्न जेष्यसे तेन तद्युक्तः ॥ २८ ॥
इति जल्पन्तं मृतकं प्रगृह्य साधकसमीपमानीय । नीरेण तत्र संस्नाप्य तं शवं मण्डले न्यस्य ॥ २९ ॥
अवदद् नृप ! यच्छास्मै खड्गं वेतालगिरमसौ स्मृत्वा । भणति भगवन् ! न सुभटा ददते कस्यापि चासिं स्वम् ॥३०॥
देहि त्वमेव तन्निजमसिमस्मै तेऽस्मि चाङ्गरक्षाकृत् । योग्याह लोहरक्षा ध्रियतेऽसौ मन्त्रसिद्ध्यै भोः ! ॥ ३१ ॥
अवदद् नृपोऽपि मयि सति कुपितयमोऽपि प्रभो ! न ते प्रभवेत् । तत्कुरु कार्यं निजमथ रुष्टः सोऽस्त्रं विधाय चोत्तस्थौ ॥३२॥
भणितस्ततो नृपेण व्रतीति नो हन्यसे त्यज ततस्त्वम् । मद्दृष्टिपथं यद्यात्मानं पातुं समीहेथाः ॥ ३३ ॥
मत्प्राणितेन वेतालसाधनं त्वं विधित्सुरसि मूढ ! । श्रुत्वेति कथमनेन ज्ञातोऽस्मीति ह्रिया कलितः ॥ ३४ ॥
कोऽप्येष महासत्त्वो ध्यायन्निति मुक्तखड्गयष्टिरयम् । विहितानुशयो योगी कृताञ्जलिर्भणति नृपतिमिति ॥३५॥

सत्त्वाधिक ! तव वचनैरज्ञानतमो निरस्तमधुना मे । कालमियन्तं कुजनासङ्गेन विडम्बितोऽस्म्यधिकम् ॥ ३६ ॥
तन्मृष मदीयमागः परलोकहितावहाय धर्माय । अथ कर्त्ताऽस्म्यभियोगं त्वं धर्मगुरुर्ममासि विभो ! ॥ ३७ ॥
अस्त्यस्त्रव्रणरोहणमणिरत्नं तद् गृहाण मत्पार्श्वात् । उररीचक्रे धात्रीधवोऽपि तत् तदुपरोधेन ॥ ३८ ॥
अत्रान्तरे विभाता रजनी द्वावपि गतौ निजं स्थानम् । सप्तदिनान्ते देवीकुक्षावथ पूर्णचन्द्रसुरः ॥ ३९ ॥
पुत्रत्वेनावतरन्निमिहिरस्वप्नोपसूचितः सोऽत्र । देवी बभार गर्भं निधानमिव भासुरं भूमिः ॥ ४० ॥ (युग्मम्).
मासेऽथ सप्तमेऽभूद् देव्या इति दोहदः स्फुटं चित्ते । यदहं गजाधिरूढा समस्तसामन्तसंयुक्ता ॥ ४१ ॥
विहरामि पुरग्रामारामेषु निशम्य भूपतिरपीति । वरवारणाधिरूढां तामनयत् क्वचन चोपवने ॥ ४२ ॥ (युग्मम्).
तत्र करुणं रुदन्तीं स्त्रियमाकर्ण्याह भूपतिं देवी । स्वरलक्षणेन खेचरवनितामेतामहं वेद्मि ॥ ४३ ॥
तत् तत्र नाथ ! गत्वा हारय[1] तद्दुःखमथ नृपो देव्या । उक्तस्तत्र गतश्चापश्यत् खेचरं[2] नरं प्रहारार्त्तम् ॥ ४४ ॥
तत्पार्श्वे च रुदन्तीं तां खेचरवल्लभां नृपो वीक्ष्य । प्राग्लब्धमणिप्रक्षालनाम्बुना तं प्रगुणमकरोत् ॥ ४५ ॥
खेचरयुवाऽपि तन्मणिमाहात्म्यसचित्रमानसो राज्ञा । भणितो भद्र ! कथं ते व्यसनमिदं दारुणं पतितम् ॥४६॥
अथवा महीयसामिह विपदोऽपि भवन्ति संपदश्चैव । हानिर्वृद्धिरपीन्दोः स्याद् नतु लघुतारकौघस्य ॥ ४७ ॥

१ व्यपनयेति पाठः क्वचित् ।    २ प्रहारविधुरं खचरपुरुषम्, इत्यपि पाठ. ।

परमार्थ इह तथापि हि कश्चित् शोश्रूयते यदाख्यासि । विद्याधरो नृपाग्रे न्यगददशेषं स्ववृत्तान्तम् ॥ ४८ ॥
अस्ति गिरौ वैताढ्ये रत्नधने पुरवरे जयन्तनृपः । जयवेगो नाम तदङ्गजोऽस्मि संसिद्धबहुविद्यः ॥ ४९ ॥
तत्रैव कुंभनगरे धरभूपः सोऽथ मेऽग्रजां जामिम् । याचितवानल्पायुर्ज्ञात्वा नैमित्तिकाच्चास्य ॥ ५० ॥
नादात्तस्मै तां मत्पिताऽचलपुरे त्वनङ्गवेगाय । खेचरवराय स ददौ क्रुद्धोऽथ धरो धराधीशः ॥ ५१ ॥ (युग्मम्)
युद्धाय जयन्तमुपस्थितश्च निहतस्तदङ्गजन्माऽथ । किन्नरनामा वैरं स्मरन् पितुर्भ्रमति मत्पृष्ठे ॥ ५२ ॥
अत्रोद्याने क्रीडन् सकलत्रो निर्दयं हतोऽनेन । इति परमार्थः सर्वः कथितोऽयं भूमिवासव ! ते ॥ ५३ ॥
श्रुत्वेत्यथ जयवेगो निमन्त्र्य नीतो नृपेण निजगेहम् । उपचक्रे च सगौरवमसौ सदारोऽशनैर्वसनैः ॥ ५४ ॥
आपृच्छय नृपं विद्याधरोऽपि तुष्टोऽगमद् निजं स्थानम् । संपूर्णदोहदाऽभूद् दवीति नृपो गतो मिथिलाम् ॥ ५५ ॥
अथ गुणमाला देवी सुषुवे सूनुं विभासुरं महसा । वर्द्धापितो नृपोऽदाद् भूरिद्रव्याणि मुदितमनाः ॥ ५६ ॥
सूरः स्वप्ने दृष्टो यत् सेनादोहदोऽभवद् देव्याः । तत् सूरसेन इत्यभिधामस्य चकार भूनाथः ॥ ५७ ॥
अथ नववये सोऽप्यबलापरंपरोत्सङ्गचारुतनुः । अन्यद्युर्जयवेगो वीक्ष्य कुमारं प्रमुदितोऽभूत् ॥ ५८ ॥
अन्यदा खेचरेन्द्रस्य जयवेगस्य वल्लभा । सूरसेनकुमारस्य रूपं वीक्ष्यातिविस्मिता ॥ ५९ ॥
अवदद् गुणमालां तां नरसिंहनृपप्रियाम् । नैमित्तिकगिरा चेन्मे भाविनी तनया तदा ॥ ६० ॥

उद्वाह्या सा त्वत्सुतेन देव्यप्याख्यत् किमुच्यते। स्वयमेव यथार्हं त्वं कुर्याः किं चिन्तयाऽत्र मे ॥ ६१ ॥ ( युग्मम् ).

यः पुष्पसुन्दरीदेवो दिवश्च्युत्वा स पुण्यतः । रविकान्ताऽभिधानायां प्रियायां खेचरेशितुः ॥ ६२ ॥

कुक्षाववातरत् पुत्रीत्वेन हंसीव मानसे । स्वप्ने मुक्तावलीं माताऽपश्यत् तदनुभावतः ॥ ६३ ॥ ( युग्मम् ).

क्रमेण पुत्री सञ्जाता नाम्ना मुक्तावलीति सा। पितृभ्यां भाषिता स्वप्नानुसारेण तदा मुदा ॥ ६४ ॥

तयोः क्रमेण तारुण्यमाप्तयोरथ पेशलम्। मिथो विवाहं विदधुः पितरो विधिवन्मुदा ॥ ६५ ॥

सूरसेनकुमारोऽथ मुक्तावल्या समं तया । मिथः प्रेमानुकूल्येनागमयत् समयं सुखात् ॥ ६६ ॥

अथान्यदा नरसिंहनृपो भूषणभूषितः । स्वरूपं मुकुरेऽपश्यन्मनसीति व्यभावयत् ॥ ६७ ॥

अहो ! ये मूर्ध्नि मे केशा अभूवन्नञ्जनप्रभाः । ते सांप्रतं मुञ्जतुल्या दृश्यन्ते विस्रसाभरात् ॥ ६८ ॥

स्वर्णादर्शाविवास्तां यौ कपोलौ मांसलौ कलौ । सकूपकौ तावद्याग्निसन्तप्तकुतपाविव ॥ ६९ ॥

निरन्तराः सशिखरा ये रदा वदनेऽभवन्। ते सांप्रतं प्रविरलाश्चला आजौ कुभृत्यवत् ॥ ७० ॥

सुलालितोऽप्यसौ देहः पोषितोऽपि प्रयत्नतः । दौस्थ्ये कुमित्रवत् प्रायः कृतघ्न इव दृश्यते ॥ ७१ ॥

विभावयन्निति स्वान्ते स्मृत्वा प्राग्जन्मसंयमम् । प्रत्येकबुद्धः सञ्जातो नरसिंहो नराधिपः ॥ ७२ ॥

सूरसेनोऽथ तत्पुत्रोऽमात्यै राज्येऽभिषिच्यत । प्रजाः पाति पितेवासौ प्रतापाक्रान्तशात्रवः ॥ ७३ ॥

चन्द्रसेनाभिधं देहद्युतिद्योतितभूतलम् ॥ ७४ ॥
प्राचीवांशुं प्रसूताऽथ राज्ञी मुक्तावली सुतम् । संप्राप्तयौवनो भोगान् भुनक्ति प्राच्यपुण्यतः ॥ ७५ ॥
वर्द्धमानः क्रमेणासौ गृहीताशेषसत्कलः । मन्त्रिणा बन्धुजीवेन विज्ञप्त इति सत्वरम् ॥ ७६ ॥
सूरसेनोऽथ भूजानिरन्यदा शरदागमे । परीक्ष्य तेषां गृह्यन्ते ये जात्याः स्युर्महाहयाः ॥ ७७ ॥
आगता वाजिवणिजो दूरदेशान्तराद्विभो ! । मूर्त्तं धर्ममिवापश्यन्मुनिं कमपि भूपतिः ॥ ७८ ॥
श्रुत्वेति सचिवस्योक्तं तान् वाहान् वाहयन् वने । मुदितोऽन्तर्महीनाथो निजागारमगाद् द्रुतम् ॥ ७९ ॥
नत्वा तस्य पदांभोजान् मुनेः श्रुत्वा च देशनाम् । यावन्नृपोऽस्ति शुश्राव स तावद् दिवि दुन्दुभिम् ॥ ८० ॥
ब्राह्मे मुहूर्त्ते तद्गुणवर्णनापरमानसः । मुक्तावल्या समं भूपोऽप्यगमत् तत्क्रमान्तिके ॥ ८१ ॥
ततो निश्चित्य तस्यर्षेर्ज्ञानोत्पत्तिं प्रमोदभाक् । नत्वा स्तुत्वा महर्षिं तं निषसादाथ तत्पुरः ॥ ८२ ॥
अत्रान्तरे कोऽपि दिव्यः पुमान् नृत्यपरश्चिरम् । कथं वाऽत्यन्तभक्त्याऽसौ जायते प्रमदान्वितः ? ॥ ८३ ॥
नृपोऽपृच्छच्च भगवन् ! क एष नरपुङ्गवः ? । इतीदृशी गुरोभक्तिरन्यद् वा शृणु कारणम् ॥ ८४ ॥
मुनिर्जगाद सम्यक्त्वगुणेन प्राणिनां भवेत् । ईश्वरधनेश्वराख्यौ वणिजौ प्रेमपेशलौ ॥ ८५ ॥
पद्मखण्डपुरेऽभूतां सम्यग्मिथ्यादृशावुभौ । दिवाऽपि वक्ति नो युक्ता भुक्तिर्द्विरेकवासरे ॥ ८६ ॥
परं धनेश्वरो मिथ्यादृष्टिरश्नन्तमीश्वरम् ।

ईश्वरः प्राह भोः ! दोषाऽशनं दोषास्पदं भवेत् । विहाय कुग्रहं तस्मात् कुरुष्वात्महितं सखे ! ॥ ८७ ॥
बहुधा बोधितोऽप्येवं न निवृत्तो निशाऽशनात् । मृत्वोत्पन्नः पञ्चकृत्वो वल्गुला दुःखसङ्कुला ॥ ८८ ॥
ततो द्विश्चर्मचटिका कौशिको जंबुकस्तथा । उज्जयिन्यां ततो जातो देवगुप्तद्विजन्मनः ॥ ८९ ॥
सुतः प्रियायां नन्दायां जन्मतो रुग्भरार्दितः । जनै रोग इति ख्यातो ववृधे प्राच्यकर्मतः ॥ ९० ॥ ( युग्मम् ).
अथेश्वराख्यः श्रद्धालुः संवेगोत्तुङ्गरङ्गभाक् । धर्मेश्वरगुरोः पार्श्वे संयमं प्रतिपन्नवान् ॥ ९१ ॥
विहरन्नथ स ज्ञानी पुर्यवन्त्यां द्विजन्मनः । देवगुप्तस्य गेहेऽगात् पक्षक्षपणपारणे ॥ ९२ ॥
पृष्टस्तेन स्वपुत्रस्यामयोपशमकारणम् । मुनिः स तूचिते देशे स्थित्वा प्रोचे द्विजोत्तमम् ॥ ९३ ॥
जीवहिंसा मृषा स्तैन्यं मैथुनं च परिग्रहः । अमीभिः स्यान्महापापैर्नरो रोगभरार्दितः ॥ ९४ ॥
परमेष्ठिमहामन्त्रं स्मरन् सद्धर्ममाचरन् । सम्यक्त्वं पालयन् सद्यो नरो नीरोगतां व्रजेत् ॥ ९५ ॥
श्रुत्वेति ससुतो विप्रो वाचं वाचंयमस्य ताम् । अणुव्रतधरः श्राद्धोऽभवद्धर्मे कृतादरः ॥ ९६ ॥
रोगो रुगाभिभूतोऽपि त्यक्ताशेषप्रतिक्रियः । वेदनां सहमानोऽपि धर्मेऽभूद् दृढनिश्चयः ॥ ९७ ॥
हरिः सदसि चान्येद्युः प्राशंसत् तद्दृढव्रतम् । अश्रद्दधानौ द्वौ वैद्यरूपौ तत्रागतौ सुरौ ॥ ९८ ॥
तावूचतुस्तं चेत् त्वं भोः! वचोऽस्माकं करिष्यसि । तदा जीवितमेतौ ते कर्त्तारौ निर्गदं वपुः ॥ ९९ ॥

यथा—प्रातर्मध्यपराह्ने च सुरा निश्यशनं तथा । शालेः सनवनीतस्य ततश्च विविधौषधैः ॥ १०० ॥
जलस्थलखेचराणां पिशितं सप्त वासरान् । भुञ्जानस्य क्षणात्तेऽमी गदा यास्यन्ति निश्चितम् ॥ १०१ ॥
श्रुत्वेत्यवग् रोगवद्धर्भावि यत्तद्ववत्वलम् । धर्मध्वंसं व्रतभङ्गं कुर्यां प्राणात्ययेऽपि न ॥ १०२ ॥
बहुधा बोधितोऽप्येष चलितो न मनागपि । तच्छुभध्यानतः प्रीताः प्रापुः सर्वेऽपि विस्मयम् ॥ १०३ ॥
निर्जरावपि तत्सत्त्वं परीक्ष्य धृतविस्मयौ । विधाय नीरुजं तं च स्तुत्वाऽगातां यथागतम् ॥ १०४ ॥
अरोग इति तस्याख्या ततः प्रभृति पप्रथे । मृत्वा कालेन सौधर्मे दिव्यभूद्दिविपद्वरः ॥ १०५ ॥
ज्ञात्वा स्वं प्राग्भवं सोऽयं नतये न इहागतः । दृष्ट्वा च केवलोत्पत्तिं ननर्त्तासौ प्रमोदतः ॥ १०६ ॥
इतीश्वरमुनेर्वाचा निपिद्धक्षणदाशनाः । प्रतिपन्नाः श्राद्धधर्मं केचिदन्ये च संयमम् ॥ १०७ ॥
सूरसेननृपोऽप्युच्चैर्वैराग्यापूर्णमानसः । त्यक्त्वा राज्य समं मुक्तावल्या संयममग्रहीत् ॥ १०८ ॥
प्रपाल्य चारु चारित्रं मासं सलेखनापरौ । ग्रैवेयके विमाने तावभूतां निर्जरोत्तमौ ॥ १०९ ॥

इति पं० श्रीसत्यराजगणिविरचिते श्रीपृथ्वीचन्द्रचरि नरसिंहनृपसूरसेनराजचरितं

षष्ठं भवग्रहणम् ।

## सप्तमो भवः ।

अथात्र भरतक्षेत्रे गज्जणाख्यपुरे नृपः । नाम्ना सुरपतिस्तस्य विनयप्रणया प्रिया ॥ १ ॥
स च भूमिपतिर्मिथ्यादृष्टिर्विप्रेषु भक्तिमान् । जनोऽपि तादृशः सर्वो यथा राजा तथा प्रजा ॥ २ ॥
एवं व्रजति काले च सूरसेनसुरोऽन्यदा । विनयप्रणयादेव्याः कुक्षौ स समवातरत् ॥ ३ ॥
सुवासरे प्रसूताऽथ राज्ञी कान्त्याऽर्कसन्निभम् । सुतं रोहणभूमीव रत्नं प्राचीव भास्करम् ॥ ४ ॥
जनको जनकोटीभिर्युतो जन्ममहं व्यधात् । सुतस्य तस्य चाभिख्यां पद्मोत्तर इति स्फुटम् ॥ ५ ॥
वर्द्धमानः क्रमेणापत् पावनं यौवनं वयः । कलाकलापमखिलं कलयामास सोऽञ्जसा ॥ ६ ॥
इतश्च वैताढ्यगिरौ सुभौमनगरे नृपः । तारवेगाभिधस्तस्य हेममालाऽभिधा प्रिया ॥ ७ ॥
तयोर्बहूनां पुत्रीणामथोपर्युदपद्यत । मुक्तावलीसुरः पुत्रत्वेन ग्रैवेयकाच्च्युतः ॥ ८ ॥
प्रसूता समये हेममाला पुत्रं महाद्युतिम् । हरिवेग इति ख्यातनामाऽसौ ववृधे क्रमात् ॥ ९ ॥
त्यक्तबाल्यवयाः सर्वकलाग्रहणकोविदः । नारीजनमनोहारि तारुण्यं प्राप स क्रमात् ॥ १० ॥

मथुरायामथो चन्द्रध्वजस्य वसुधापतेः । आस्तां चन्द्रमतिः सूरमतिः पत्न्यावुभे शुभे ॥ ११ ॥
शशिलेखासूरलेखाऽभिधाने च तयोः क्रमात् । पुत्र्यावभूतां सद्रूपलावण्यभरभूषिते ॥ १२ ॥
अनयोर्जनकोऽकार्षीदनुरूपवराप्तये । स्वयंवरं समाहूतास्तत्र सर्वेऽपि भूधवाः ॥ १३ ॥
पश्चात्तरकुमारोऽपि परिमेयपरिच्छदः । स्फुरद्विपुलनेपथ्यः प्रस्थितो मथुरां प्रति ॥ १४ ॥
कुमारो लङ्घयन्मार्गं वीक्ष्यैकं तापसाश्रमम् । नत्वा कुलपतिं तत्र निषण्णस्तत्पदान्तिके ॥ १५ ॥
ततः कुलपतिस्तस्य पुरः कन्यां मनोरमाम् । उपादाय जगौ वत्स ! स्वीकुर्वेतां निजोचिताम् ॥ १६ ॥
कुमारोऽवग् मुने ! ब्रह्मभूतां वः स्यात् कुतः सुता ? । जगौ कुलपतिर्वत्स ! परमार्थं शृणु स्वयम् ॥ १७ ॥
अस्त्युत्तरस्यां सुरभिपुरं तत्र धराधवः । वसन्तराजस्तत्पत्नी पुष्पमालेति चाभवत् ॥ १८ ॥
गुणमालाऽऽह्वया पुत्री तयोः पञ्चसुतोपरि । जाता ततोऽस्त्यभिमता पित्रोः सा पुत्रतोऽधिकम् ॥१९॥
न व्यवाहयतां चैतां पितरौ विरहातुरौ । तद्रूपमोहितश्चम्पापतिरागाच्छुकोऽन्यदा ॥ २० ॥
सचिवप्रेरितो भूपः प्रादात् तस्मै च तां सुताम् । पुत्रीवियोगभीरुश्चातिष्ठिपत् तं निजे पुरे ॥ २१ ॥
रममाणः समं प्राणप्रेयस्या स तया समम् । अतिव्रजन्तं नाज्ञासीत् समयं नमयन्नरीन् ॥ २२ ॥
क्षारत्वेनेव यत् सिन्धोः कलङ्केन विधोरिव । मृगयाव्यसनेनास्य दोषोऽभूद् दुस्त्यजस्तथा ॥ २३ ॥

ततो राज्ञा नियुक्तोऽस्य बोधनाय विशारदः । सुमुखो नाम भट्टः स प्राप्यावसरमालपत् ॥ २४ ॥
प्रत्यर्थिनोऽपि मुच्यन्ते तृणानि दधतो मुखे। तृणाशिनोऽप्यमी नित्य हन्यन्ते हा! पशुव्रजाः ॥ २५ ॥
केयं नीतिश्च किं शौर्यं क्षत्रधर्मोऽपि को ह्ययम् । घ्नन्ति यत् पुरुषा जन्तूननस्त्रानकृतागसः ॥ २६ ॥
पङ्गुकुष्ठिकुणित्वादि फलमङ्गिवधोद्भवम् । मत्वाऽऽत्मनः सुखाकाङ्क्षी परपीडां विवर्जयेत् ॥ २७ ॥
बोधिताऽपीति पापर्धि हियैवोज्झन्मनो विना । पित्राऽऽहूतः स चान्यद्युश्चचाल स्वपुरं प्रति ॥ २८ ॥
आपन्नसत्त्वां स्वां पत्नी सहादाय प्रतस्थिवान् । क्रमेण प्राप्तवानेषोऽस्माकमेतत्तपोवनम् ॥ २९ ॥
दृष्ट्वा वनचरान् जीवान् पापर्द्धिविवशो भृशम् । यावद्धावति तान् हन्तुं तावत् पापनियोगतः ॥ ३० ॥
तृण्याऽऽच्छन्नेऽगाधगर्तेऽपतन्निशितकीलके। भिन्नकुक्षिर्विधुराङ्गो नीतो भृत्यैर्बहिस्ततः ॥ ३१ ॥ ( युग्मम् ).
चरेभ्यो ज्ञातवृत्तान्तो वसन्तः पुष्पमालया । यावत् समागतस्तावत् स परासुरभूत् क्षणात् ॥ ३२ ॥
शोकार्त्ता गुणमालाऽग्निं प्रविविक्षुः कथञ्चन । निषिद्धा विललापोच्चैः सोरस्ताडं सुदैन्यतः ॥ ३३ ॥
पितरावथ दुःखार्त्तौ सुतामादाय तौ ततः । गतौ कुलपतेः पार्श्वे सोऽप्यमून् प्रत्यबूबुधत् ॥ ३४ ॥
राजन्नयं भवो घोरः क्लिश्यन्ते यत्र जन्तवः । जरामरणदुःखौघैश्चतुर्गतिगमोद्भवैः ॥ ३५ ॥
चला लक्ष्मीश्चलाः प्राणाश्चलाः स्वजनसङ्गमाः । वृथा संसारवासेऽस्मिन् सुखाशां कुरुते जनः ॥ ३६ ॥

तद्विहाय नृप ! प्रेमसम्बन्धं बन्धुषु त्यज । रमय स्वमनो धर्मे शमयार्त्तिं ममत्वजाम् ॥ ३७ ॥
इति श्रुत्वा कुलपतेर्गिरं बुद्धो धराधवः । त्यक्त्वा राज्यं सभार्योऽपि सोऽभूद् दीक्षाकृताग्रहः ॥ ३८ ॥
ससत्त्वेति निषिद्धाऽपि सा पित्रोर्विरहासहा । अनुज्ञया कुलपतेर्गुणमालाऽप्यलाद् व्रतम् ॥ ३९ ॥
कालेन गुणमालाऽथ सुखेन सुषुवे सुताम् । परासुश्चाभवत् सूतिरोगेण विपिने स्थिता ॥ ४० ॥
मातामही पुष्पमाला कियत्कालमपालयत् । वनमालामिमां बालां नामशेषाऽथ साऽप्यभूत् ॥ ४१ ॥
मुनिर्वसन्तराजाख्यः पालयन्नस्मि मोहतः ॥ ४२ ॥
ततोऽहं कर्मदोषेणाक्षमो मोक्तुमिमां सुताम् । गुर्वादेशान्मया त्वेषा ढौकिताऽस्ति भवत्पुरः । साधुना नाधुना कार्यो याञ्चाभङ्गस्त्वया ततः ॥ ४३ ॥
तथेत्यभिदधत्यस्मिन् वनमालाद्यलङ्कृताम् । वनमालामदात् तस्मै मुदा तत्र स तापसः ॥ ४४ ॥
विद्यां वेतालिनीं नाम्ना वनमालां च तां प्रियाम् । पद्मोत्तरः समादाय प्रतस्थौ मथुरामथ ॥ ४५ ॥
समग्रे राजचक्रे च तत्रायाते क्रमादथ । विवाहमण्डपे तस्मिन्नागातां ते पतिंवरे ॥ ४६ ॥
भ्रामं भ्रामं भ्रमरीव कुमारारामगोचरे । पद्मोत्तरकुमारे तु निविष्टा दृष्टिरेतयोः ॥ ४७ ॥
बालाभ्यां वरमालाऽस्य चिक्षिपे कण्ठकन्दले । प्रवर्त्तितो जयस्तूर्यरवैरापूर्यताम्बरम् ॥ ४८ ॥
अथान्ये भूभुजः पद्मोत्तरस्य दयिताद्वयम् । मानादसहमानाश्चावेष्टयंस्तं निजैर्बलैः ॥ ४९ ॥

स्मृत्वा वेतालिनीं पद्मोत्तरो विद्यामनुत्तराम् । अनाशयद् रिपुबलं पलालमिव मारुतः ॥ ५० ॥
भुजौजसाऽञ्जसा सर्वे निर्जिता ऊर्जिता अपि । भूभुजो भूभुजङ्गाङ्गभुवोऽथ लुलुठुः पदोः ॥ ५१ ॥
महामहेन स वृतो कुमार्या भूभुजङ्गभूः । स्थित्वा तत्र कियत्कालं संप्राप नगरं निजम् ॥ ५२ ॥

पितृप्रदत्तां युवराजलक्ष्मीमक्षीणपुण्योऽनुभवन्नथैषः ।
पद्मोत्तरोऽयं शशिसूरलेखाप्रियान्वितोऽभुङ्क्त सुखानि नित्यम् ॥ ५३ ॥

इतश्च वैताढ्यगिरौ पुरे गगनवल्लभे । विद्याधरेन्द्रः कनककेतुर्नाम्नाऽस्ति विश्रुतः ॥ ५४ ॥
देवी कनकरत्येका तस्य रत्नवती परा । तयोः सुतैका कनकावली रत्नावली परा ॥ ५५ ॥
तयोर्जन्मदिने नैमित्तिकोऽयमिदमादिशत् । एकां परिणयन्नेकश्रेणीशः स भविष्यति ॥ ५६ ॥
विवाहयन्तुभे कन्ये भावी श्रेणिद्वयीशिता । अथ ते वर्द्धमाने द्वे कन्ये तारुण्यमापतुः ॥ ५७ ॥ ( युग्मम् ).
स्वयंवरमहे पित्रा प्रारब्धेऽखिलखेचराः । समागुर्हरिवेगं तु प्रमोदाद् वृणुतः स्म ते ॥ ५८ ॥
कन्याद्वयं परिणीय स आगान्नगरं निजम् । निश्चिकाय पिता श्रेणिद्वयीशोऽयं भविष्यति ॥ ५९ ॥
दध्यौ पिता प्राग्भवे किमेतेन सुकृतं कृतम् । ज्ञानवान् कोऽपि यद्येति पृच्छ्यते तदिदं ध्रुवम् ॥ ६० ॥
इतश्च तत्र संप्राप्तः श्रीतेजा नाम केवली । नत्वा पप्रच्छ तद् भूपो व्याहरद् भगवानथ ॥ ६१ ॥

केवल्युक्तं मुदाऽशृणोत् ॥ ६२ ॥ ( युग्मम् ).
कलावतीशङ्खभवाद्धरिवेगभवावधि । तारवेग, सुसंवेगः कर्मनिर्मूलनोद्यतः ॥ ६३ ॥
प्रबुद्धस्तारवेगोऽथ दत्त्वा राज्यं स्वसूनवे । तदङ्घ्रिमूले प्राव्राजीत् द्वादशव्रतीम् ॥ ६४ ॥
जातजातिस्मृतिश्चान्यः श्राद्धधर्मं प्रपेदिवान् । सम्यग्दर्शनपूतात्मा पालयद् किं नामभृच्च सः ? ॥ ६५ ॥
अन्यदाऽवसरं प्राप्य नृपोऽपृच्छन्मुनीश्वरम् । सूरसेनः प्रभो ! कुत्रोत्पेदे पद्मोत्तराभिधः ॥ ६६ ॥
सुनापो बोधिरस्यास्ति दुःप्रापो वा विभो ! वद । स जगौ गज्जणेशस्याङ्गभूः न प्रतिक्रियाम् ॥ ६७ ॥
संप्रत्यस्ति सुबोधिश्च न पुनर्धर्ममाप्तवान् । सामग्र्यभावाद् यद् योग्योऽप्याप्नुते धर्माचार्यमनाप्नुवन् ॥ ६८ ॥
यतः—योग्योऽपि धर्मरत्नस्य प्राणी बोधिं न चाप्नुते । विशुद्धधर्मचरितं स वेगतः ॥ ६९ ॥
त्वत्त एवाधिगम्यार्हन्मतं बोधिं स चैष्यति । श्रुत्वेति तोषमगमद्धरिवेगः दिदृक्षोत्कण्ठयाऽन्यदा ॥ ७० ॥
क्रमेण श्रेणियुग्मैश्यं प्रपन्नस्तारवेगभूः । पद्मोत्तरकुमारस्य विकृत्याञ्जनसन्निभम् ॥ ७१ ॥
गज्जणं मण्डलं प्राप्तः स एकाक्यपि खेचरः । ओतुमेकं महाकायं स्फूर्जत्तारस्त्नगणाकरम् ॥ ७२ ॥
वराटिकास्रग्भिरलं समलङ्कृतहृद्गलम् । सुवर्णकिङ्किणी किमेष भोः!॥ ७३ ॥
सुवर्णशृङ्खलाबद्धं गृहीत्वाऽगाच्चतुष्पथम् । कौतुकान्मिलिता लोकाः पृच्छन्त्येनं किं भवत्यहो!॥७४॥ (पञ्चभिः कुलकम् ।)
विक्रेयः किञ्च मूल्यं सोऽप्याह स्म स्वर्णलक्षकम् । जनोऽवगोतुमात्रस्येयन्मूल्यं

खेचरोऽवग्गुणैरश्मदारूणामप्यमूल्यता । मण्यादयो महर्घ्याः स्युर्न वा किं चन्दनादयः ? ॥७५॥
गुणाः केऽस्येति लोकोक्ते खेचरोऽवग् नृपौकसि । गम्यते येन तत्र स्याद् गुणागुणविनिश्चयः ॥ ७६ ॥
इत्युल्लापपरो वृद्धवाडवैः परितो वृतः । वृषदंशं पुरस्कृत्य स नृपास्थानमागमत् ॥ ७७ ॥
प्राग्भवाभ्यासतः पद्मोत्तरे तं प्रेमपेशलम् । पश्यत्यथ महीशस्तमूचे भोः ! कौतुमात्तवान् ? ॥ ७८ ॥
खेचरः स्माह केनापि ददे दिविषदैष मे । गुणाढ्यस्यास्य नो मूल्यं वर्त्तते यज्जगत्यपि ॥ ७९ ॥
के गुणा अस्य राज्ञोक्ते खेचरोऽवक् शृणु प्रभो ! । जीयते नापि कैरेष श्वमार्जारादिकैरहो ! ॥ ८० ॥
अन्यच्च यत्रैव वसेन्निशि तत्राखवो ध्रुवम् । द्वादशयोजनैः स्थानं तत् त्यजन्ति भयद्रुताः ॥ ८१ ॥
गुणा अन्येऽपि बहवोऽस्येत्यसौ वाडवानवक् । मूल्यं नास्त्यस्य किं त्वेष विक्रीणे दौस्थ्यपीडितः ॥८२॥
पश्यन्तः श्रुतिमेकां ते वृषजग्धामदोऽवदन् । विहस्य सूत्रकण्ठा भोः ! यदि द्वादशयोजनीम् ॥ ८३ ॥
प्रणश्यन्त्याखवस्तत् तैः किमीषत्कर्ण आशितः ? । पूर्वापरविसंवादिन्यसौ यद्वो वचःस्थितिः ॥ ८४ ॥ ( युग्मम् ).
खेचरोऽथावदद्भट्टाः ! सद्रत्नं नेति दूष्यते । देवादिष्वपि येनैवं विरोधो वः प्रकीर्त्यते ॥ ८५ ॥
तथाहि—यो गोद्विजाङ्गनाभार्दीन् हन्यात् कीदृक् स उच्यते ? । द्विजाः प्रोचुर्महापापः सोऽद्रष्टव्यमुखो भवेत् ॥८६॥
यद्येवं तत् प्रदीप्तो यो द्विजबालादिकं दहेत् । स पूज्यते कथं देवधियाऽग्निर्धर्मकाङ्क्षिभिः ? ॥ ८७ ॥

अथ चेद् देवकोटीनां मुखं तेनैव तर्प्यते। तत्कथं तदनिष्टं च शवाग्रेष दहेत् स्वयम् ॥ ८८ ॥
शौचधर्मविदो यूयमशुचिग्रासतत्परम् । पूजयध्वं कथं देवधिया धूमध्वजं द्विजाः ! ॥ ८९ ॥
एवमंभो हरेर्मूर्ति भणन्तः पादधावनात् । अशुचिक्षालनात् किं न विरोधो वः प्रवर्त्तते ? ॥ ९० ॥
विरोधो यदि देवेषु तत् कथं दोषचिन्तनम् ? । क्रियतेऽस्मिन्नोतुरत्ने तथाऽन्यदपि चिन्त्यताम् ॥ ९१ ॥
स्मरारिमपि मन्यध्वे यथा गौरीरतं शिवम् । वृषखादितमप्योतुं तथा किं नाखुहिंसिनम् ? ॥ ९२ ॥
इति तथ्यगिरा विप्राः कृताः सद्यो निरुत्तराः । दध्यौ पद्मोत्तरः कोऽपि महानेष नरोत्तमः ॥ ९३ ॥
स्वरूपं देवतादीनां तत्पृच्छाम्यमुमादृतः । तथा कृते सोऽप्यगदद्धर्मं सर्वज्ञभाषितम् ॥ ९४ ॥
हरिवेगः पुनः पद्मोत्तरं प्रति जगावदः । किं न स्मरसि भोः ! प्राच्यभवे ग्रैवेयकश्रियम् ? ॥ ९५ ॥
जातजातिस्मृतिः सोऽथ हरिवेगमभाषत । अहो ! ते ज्ञाननैर्मल्यमहो ! ते चोपकारिता ॥ ९६ ॥
सद्धर्मपक्षपातस्ते अहो ! कीदृगनुत्तरः । अहो ! कृपापरत्वं त अहो ! वात्सल्यमुत्तमम् ॥ ९७ ॥
त्वं तु मुक्तावलीजीवः खेचरत्वमुपागतः । कथञ्चिन्मम बोधाय समायातोऽसि निश्चितम् ॥ ९८ ॥
तन्मुक्त्वा गूढरूपं स्वं यथावस्थं प्रदर्शय । तथा कृते मिथो गाढमालिलिङ्गतुरुन्मुदौ ॥ ९९ ॥
नृपोऽपि ज्ञाततद्वृत्तः सपौरः सपरिच्छदः । जिनधर्मैकनिष्ठोऽभूत् सुसङ्गः कस्य नेष्टदः ? ॥ १०० ॥

अत्रान्तरे वनपालोऽवनीपालं व्यजिज्ञपत् । स्वामिन् ! वर्द्धाप्यसे स त्वं केवल्यागमनेन यत् ॥ १०१ ॥
पद्मोत्तरहरिवेगाद्यन्वितो नृपतिस्ततः । वन्दनाय गतस्तत्राश्रृणोत् तद्देशनां मुदा ॥ १०२ ॥
प्रबुद्धो भूपती राज्यं त्यक्त्वा प्रव्रज्य दुस्तपम् । तपस्तप्त्वा दग्धकर्मा प्रपेदे परमं पदम् ॥ १०३ ॥
पद्मोत्तरः श्राद्धधर्मं प्रपन्नोऽथ पितुः पदे । हरिवेगेनाभिषिक्तः प्राज्यं राज्यमपालयत् ॥ १०४ ॥
अथान्यदा हरिवेगः पद्मोत्तरं निजं पुरम् । नीत्वोवाच सखे ! विद्या अनवद्या गृहाण मे ॥ १०५ ॥
आदत्स्व खेचरैश्वर्यं सोऽवक् भ्रातस्त्वमेव मे । द्वितीयतनुभूतोऽसि तद् यस्यासि त्वमीशिता ॥ १०६ ॥
तस्याहमप्यधीशोऽस्मि तथा धर्मप्रदानतः । दातव्यं यत् तु दत्तं तत् किमतोऽप्यस्ति यद् वरम् ॥ १०७ ॥
तत् पालयावः स्वे राज्ये यावत् पुत्रोद्भवो भवेत् । ततो राज्यधुरं दत्त्वा चरिष्यावो व्रतं स्वयम् ॥ १०८ ॥
इत्थं मिथो मन्त्रयित्वा शाश्वतार्हद्गृहादिषु । कृत्वा यात्रामुभौ गज्जणकं नगरमापतुः ॥ १०९ ॥
अथान्यदोभौ नृपती नत्वार्हच्चैत्यमादृतौ । निवृत्तौ तावता यष्टिमुष्टिघातार्त्तलोचनम् ॥ ११० ॥
आमुक्तकेशं कौपीनवाससं धूलिधूसरम् । निन्द्यमानं जनैर्द्यूतकृतमेकमपश्यताम् ॥ १११ ॥ ( युग्मम् ).
कृपार्द्रौ तावथोचाते भोः ! किमेषोऽर्द्यते भृशम् । आख्यत् कोऽप्यत्र कोटीशवरुणश्रेष्ठिनन्दनः ॥ ११२ ॥
द्यूतव्यसनदोषेण पित्रा निर्वासितो गृहात् । तथापि न जहौ दैवहतकोऽसौ दुरोदरम् ॥ ११३ ॥

अथ लक्षं हारयित्वा पलायन् जगृहे बलात्। विना लक्षं न मोक्ष्यामो न वोऽर्हा तस्मिरस्य तत्॥ ११४ ॥
ततो लक्षप्रदानेन मोचयित्वा तमञ्जसा । विषमां कर्मणश्चेष्टां भावयन्तौ गतौ गृहम् ॥ ११५ ॥
राज्यभारक्षमौ जातौ क्रमात् तयोस्तनूरुहौ । दत्त्वा राज्यभरं सून्वोः प्रव्रजावः स्वयं रयात् ॥ ११६ ॥
इति चिन्तयतोरागाद् रत्नाकरमुनिर्वने । गत्वा तौ तं गुरुं नत्वा श्रुत्वा तद्देशनां मुदा ॥ ११७ ॥
सुतयोः क्ष्माभरं न्यस्य प्रशस्यदिवसेऽन्यदा । परिव्रजतुः सारसंवेगरससङ्गतौ ॥ ११८ ॥
अधीत्यैकादशाङ्गीं तौ तपःकर्मसु कर्मठौ । ग्रैवेयके सुरौ जातौ त्रिनवोदधिजीवितौ ॥ ११९ ॥

**इति पं० श्रीसत्यराजगणिविरचिते श्रीपृथ्वीचन्द्रमहाराजर्षिचरिते पद्मोत्तरहरिवेग-**
**महामुनिचरितं सप्तमं भवग्रहणम् ।**

# अष्टमो भवः ।

अस्त्यत्र पाण्डुविषये पाण्डुपुरं श्रीवलो नृपस्तत्र । जयतीह तत्कनीयान् युवराजः शतवलो नाम ॥ १ ॥
तौ रामलक्ष्मणाविव मिथो घनप्रेमबन्धुरौ बन्धू । पालयतः पितृदत्तं प्राज्यं साम्राज्यमभियुक्तौ ॥ २ ॥
दयिते तयोर्द्वयोरपि सुलक्ष्मणालक्ष्मणाभिधाने च । पद्मोत्तरसुरभवत् सुलक्ष्मणायाः सुतत्वेन ॥ ३ ॥
गाङ्गेयगिरिस्वप्नानुसारतः स गिरिसुन्दरो नाम । हरिवेगसुरोऽपि सुतत्वेनाभूल्लक्ष्मणाकुक्षौ ॥ ४ ॥
रत्नोच्चयसुस्वप्नानुसारतो रत्नसार इति नाम्ना । तौ प्रेमशृङ्खलयितौ द्वावप्येकत्र रेमाते ॥ ५ ॥
आस्थानसंस्थितोऽथान्यदा वली श्रीवलो नृपः पौरैः । विज्ञप्तो दुःखार्त्तैस्त्वयि राज्यपि नो महद् व्यसनम् ॥ ६ ॥
ह्रियते कमला महिला गृहाङ्गणगता प्रसह्य केनापि । न च दृश्यतेऽत्र कश्चिद् देवो वा दानवो वाऽपि ॥ ७ ॥
श्रुत्वेति नृपोऽप्याहूयारक्षमतर्जयच्च किं रे त्वम् । स्वपिषि निशि न भ्रमन्नसि निशितासिकरः पुरस्यान्तः ॥ ८ ॥
आरक्षोऽप्यवददहं भ्रमामि पुरगोपुराणि पिदधामि । धावन्नपि तं दस्युं न लभे तु शृणोमि जनरावम् ॥ ९ ॥

किंकर्त्तव्यतामूढः ॥ १० ॥
यत्नेन तदवरोधं रक्षतु देवोऽस्तु पौरवर्गोऽयम् । आकर्ण्येति नृपो यावत् किंकर्त्तव्यतामूढः ॥ १० ॥
कृतनतिना विज्ञप्तस्तावद् गिरिसुन्दरेण सप्ताहात् । देवाज्ञया लभेऽहं तमेव चौरं दुराचारम् ॥ ११ ॥
नरदेवेनाज्ञप्तो नियुक्तवान् भूपभूः स्वचरपुरुषान् । तैरपि न कोऽपि लेभे ततः स निरगात् स्वयं नगरात् ॥ १२ ॥
शून्योद्यानादिषु पर्यटंस्ततो नातिरगिरिशृङ्गे । दृष्ट्वा ज्वलन्तमग्निं यावत् तदुपान्तमभिसरति ॥ १३ ॥
दृष्टश्च तत्र गुग्गलसमिदाहुतितत्परो नरः कोऽपि । तत्सन्निधावसिध्यद् दुःसाध्यः क्षेत्रपालोऽस्य ॥ १४ ॥
स क्षेत्रपस्तमूचे सिद्धोऽस्मि तवास्य नुर्महिम्नैव । अन्तर्हिते च तस्मिन् स साधकस्तं कुमारमवक् ॥ १५ ॥
सत्पुरुष ! कृतो भवता विहितागतिना ह्यनुग्रहोऽयं मे । तद् भण किं ते संपादये ततो भूपभूरगदत् ॥ १६ ॥
कृतकृत्योऽहं विद्यासिद्ध्या तव चाथये किमपरं भोः ! । एवमनिच्छायादाद् विद्यां रूपान्तरकरीं सः ॥ १७ ॥
अत्रान्तरेऽधिपुरमुरुकरुणं तरुणीरवं समाकर्ण्य । ह्रियते दुरात्मनेयं काऽपीत्यभिधावितस्तमसौ ॥ १८ ॥
न च कश्चनाप्यपश्यत् तत्राप्यथ निश्चिकाय गिरिदर्याम् । निवसन्नसौ दुरात्मा कथं परिज्ञास्यत इदानीम् ॥ १९ ॥
हुं ज्ञातं स्त्रीलोलोऽयं तावत् तद् दधे युवतिरूपम् । दृष्टस्तथाकृतेऽसौ निर्गच्छन् देवकुलिकातः ॥ २० ॥
कापालिकवेषधरं दृष्ट्वा हन्मीति वा न दर्शनभृत् । वध्योऽसावविमृश्यारुददथ कृतक स जिज्ञासुः ॥ २१ ॥
रुदितश्रवणादथ सोऽप्यागाद् दृष्ट्वा च तत्प्रवररूपम् । प्राह स्म किमत्रैकाकिनी कथं रोदिषि च भद्रे ? ॥ २२ ॥

अवदत् कुमारललना पत्या संप्रस्थिता प्रवासमहम्। सुप्ताऽत्र तेन मुक्ता विस्मृतमिदमस्य करवालम् ॥२३॥
अलपत् कपालधारी सुन्दरि! विधिना स वञ्चितो रङ्कः। न पुनर्भवादृशीनामनाथता क्वापि जायेत ॥२४॥
अगदत् कुमाररामा न युक्तमेवं कुलस्त्रियो भगवन्!। प्राणेश्वरस्य विरहे क्षणमपि यज्जीव्यते तदिह ॥२५॥
तत् किमपि मे प्रदर्शय तीर्थं भगवन्! करोमि यत्राहम्। निजजीवितप्रयाणं ततश्च कापालिकोऽप्यलपत् ॥२६॥
अस्त्यत्रैकं तीर्थं वसंस्त्रिरात्रं प्रियं लभेतात्र। तत् किं निरर्थमृत्या कुरु तीर्थोपासनं भद्रे! ॥२७॥
इत्यालप्योभावपि गतौ ततः क्वापि देवकुलपृष्ठे। कापालिको जघान क्रमेण धरणीतलं तत्र ॥ २८ ॥
तत्सङ्केतादुदघाटि चैकया नागकन्यकोपमया। गुप्तद्वारं वशया प्रविविशतुरुभौ क्रमात् तत्र ॥ २९ ॥
देवार्चनं प्रकुरुतं युवामहं चानयामि कुसुमानि। इत्युल्लपन् कपाली निरगाद् बहिरिह कुमारोऽस्थात् ॥३०॥
प्राच्यस्त्रिया कुमारस्त्र्यूचे त्वमनेन पापिनाऽऽत्ताऽसि। अहमिव सखि! कुत्र जगौ कृतकस्त्री भगिनि! मे कथय ॥३१॥
कोऽयं का वा भवती किमत्र वसतीति? सा रुदन्त्याख्यत्। कापालिकवेषधरो दस्युरयं दण्डपालाख्यः ॥ ३२ ॥
अह्नि भ्रमेद् यथेच्छं निशि हृत्वा स्त्र्यादिकं क्षिपत्यत्र। सञ्चितमस्त्यावाभ्यां सहामुनैकोत्तरं शतं स्त्रीणाम् ॥३३॥
अहमपि च पाण्डुपुरसन्महेभ्यतनया हृता सुभद्राऽऽख्या। श्रीबलशतबलराज्येऽप्यवशाऽत्र वसामि किं कुर्वे ॥३४॥
प्राह स्म कुमारस्त्री सखि! कथय कुतोऽस्य चेति सामर्थ्यम्?। भणितं तया त्रिसन्ध्यं महत्यसौ खड्गरत्नमिह ॥३५॥

तस्मिन्नाते दिनमणिवद् भ्रमति यथेच्छया जगति गतभीः। तद्विरहितोऽथ कातर इवासकौ लक्ष्यते नित्यम् ॥३६॥
दर्शय तत्करवालं कुमारवचसेत्यदर्शयत् सा तत्। आदाय तन्निजमसिं तत्स्थाने चामुचत् सोऽपि ॥ ३७ ॥
अत्रान्तरे कपाली सोऽथागान्नृपमुतः स्वरूपधरः। तमतर्जयत् तदैषोऽप्यादाय विकोशनिस्त्रिंशम् ॥ ३८ ॥
यावदढौकत योद्धुं तावन्नीतः क्षणेन संयमिनीम्। ताः सर्वाश्चाहृष्यन् वीक्ष्य मृगाक्ष्यस्तदिदमखिलम् ॥ ३९ ॥
भणितं ततश्च गिरिसुन्दरेण शंसत मृगेक्षणाः! स्व स्वम्। स्थानं तत्र च युवतीर्भवतीः संप्रापये सद्यः ॥ ४० ॥
ताश्च सुभद्रावचसा ज्ञात्वा गिरिसुन्दरं ततोऽवोचन्। लज्जामहे ह्यनार्या दर्शयितुं स्वं मुखं स्वेषाम् ॥ ४१ ॥
तदिदानीं त्वं शरणं मरणं वा नोऽस्तु दैवहतकानाम्। भवतोपकृतिक्रीताः न शक्नुमस्त्वां ततो मोक्तुम् ॥ ४२ ॥
इति कुरु पालनमथवा ज्वालनमनलेन हीनदीनगिराम्। करुणैकरसाः सुजनाः उचितानुचिते न गणयन्ति ॥४३॥
इति विहितनिश्चयास्ता दृष्ट्वा सकृपं नृपाङ्गभूर्दध्यौ। ही शुद्धानामपि मुग्धानामासीद् व्यसनमासाम् ॥ ४४ ॥
म्रियमाणा अपि तावद् द्रष्टुं शक्नोमि नो कथञ्चिदमूः। तदहं भवामि नाथोऽप्यासां संप्रत्यनाथानाम् ॥ ४५ ॥
इति निश्चित्यैताभी रममाणोऽसावतिष्ठदथ मासम्। स्मृत्वाऽन्यदा स्वबन्धून् संस्थाप्य प्रणयिनीस्तत्र ॥ ४६ ॥
कृतरूपपरावर्त्तः पाण्डुपुराभ्यासमागतो दृष्ट्वा। शोकाकुलानशेषानपि पौरान् कमपि सोऽपृच्छत् ॥४७॥ (युग्मम्)
तच्छोकहेतुमथ सोऽप्याख्यद् गिरिसुन्दराभिधोऽनृपमूः। निरगात् कदाऽपि दस्युग्रहणाय न चागतो गतो मासः ॥४८॥

अद्य तु युवराजसुतश्च रत्नसारस्तमन्वगात् क्वापि । सविशेषं दुःखानामुत्कर्षो वर्द्धते तेन ॥ ४९ ॥
तद्वज्रघाततुल्यं वचः समाकर्ण्य निर्गतो नगरात् । भ्रातरमन्वेषयितुं गिरिसुन्दरनामकस्त्वरितम् ॥ ५० ॥
ग्रामाकरनगरारण्यभूमिभृच्छृङ्गगिरिनिकुञ्जेषु । भ्रामं भ्रामं पृच्छन्नन्यानगणितक्षुत्तृट् ॥ ५१ ॥
कुत्रापि न तद्वार्त्तां प्रापदसौ क्वचिदथापि देवकुले । शृणुते पथिकालापांस्तत्रैकोऽवददहो ! शृणुत ॥५२॥
कौतुकमेकं यदहं दिदृक्षुरभियोगतो विविधदेशान् । भ्राम्यन्नुद्वसदेश प्राप्तः श्वापदशताकीर्णम् ॥ ५३ ॥
मिलितोऽथामरनिरुपमरूपो भूपाङ्गभूस्तदा कोऽपि । तेन समं पथि गच्छन् शून्यपुरं किमपि वीक्ष्याग्रे ॥५४॥
रमणीयमिति सकौतुकमावामालोकयाव इदमखिलम् । रुचिरतरविपणिसुरहर्म्यतुङ्गवप्रप्रपाऽऽकीर्णम् ॥ ५५ ॥
निशि निशितासिशयौ शेवहे स्म तत्र प्रबुद्धमथ पूर्वम् । नृपसुतमागत्य तदा व्याघ्रः प्रोवाच नरवाचा ॥ ५६ ॥
नृपसूनो ! क्षुधितोऽहं तद् देह्येनं नरं कुरु कृपां मे । अवदत् सोऽपि न शरणागतं विमुञ्चामि मां भुङ्क्ष्व ॥५७॥
यत —शरणागता भटानां सिंहानां केसरा उरः सत्याः । चूडामणयः फणिनां गृह्यन्ते जीवतां नैव ॥ ५८ ॥
इत्युक्त्यवगततन्निश्चयोऽथ नृपसुतमालपद् व्याघ्रः । त्वत्सत्त्वात् तुष्टोऽस्मि प्रार्थय किमपीप्सितं भद्र ! ॥ ५९ ॥
कस्त्वमिति नृपभुवोक्ते देशस्यास्यास्मि नायकोऽनिमिषः । कथमुद्वसस्तदेष त्वयि सत्यपि विस्मयोऽयं मे ॥६०॥
इति पृष्टोऽयं निजकं प्रकाश्य रूपं जगाद परमार्थम् । गन्धारनाम्नि नगरे रविचन्द्रो नाम नरनाथः ॥ ६१ ॥

रतिचन्द्रकीर्त्तिचन्द्रौ तस्याभूतामुभौ प्रियौ पुत्रौ । राज्यं च यौवराज्यं तयोर्वितीर्याथ रविचन्द्रः ॥ ६२ ॥
प्राव्राजीत् स्वयमथ रतिचन्द्रो गेयादिरसवशत्वेन । सर्वेषु कीर्त्तिचन्द्रं नियुक्तवान् राजकार्येषु ॥ ६३ ॥
प्रचुरलोभाभिभूतः स च सर्वं राज्यमात्मसात् कृत्वा । बद्ध्वा रतिचन्द्रनृपं द्रुतं वधायादिशत् तं च ॥ ६४ ॥
रतिचन्द्रोऽपि सदैन्यं प्रोचे भ्रातर्न युज्यते भवतः । कुन्देन्दुकम्बुविमले कुले मषीकूर्चकं दातुम् ॥ ६५ ॥
यदि राज्यलालसस्त्वं तद् दत्तं ते मयैतदखिलमपि । यदि न प्रत्येषि तथाऽपि मुञ्च यत् तातमनुयामि ॥६६॥
इत्युक्तोऽपि न मुञ्चति यदा तदाऽसौ जगाद रतिचन्द्रः । माभूत् तवैवमयशो रचय चितां यद् विशाम्यग्निम् ॥६७॥
तेन च तथाकृतेऽसावविशदनलं नृपः सभार्योऽपि । ही ही लुब्धात्मानः कृत्याकृत्ये न गणयन्ति ॥ ६८ ॥
मृत्वा च स रतिचन्द्रः सञ्जातो भूतरमणयक्षोऽहम् । या मतिरन्ते सा गतिरिह यस्माज्जायते जन्तोः ॥ ६९ ॥
स्मृत्वा निष्कारणवैरिणं च कुपितोऽक्षिपं च सर्वजनम् । अन्यान्यजनपदेष्वप्यनश्यदथ कीर्त्तिचन्द्रः सः ॥७०॥
अहमेतदुद्वसं जनपदमथ तिष्ठामि वीक्ष्य वामत्र । छलनायैतः प्रीतः सत्त्वेन तवैव परमार्थः ॥ ७१ ॥
अथ कथय किमपि यद्भवदिष्टं संपादयामि यदमोघम् । भवति सुरदर्शनं नृपसुतोऽप्यवग् देव ! यद्येवम् ॥७२॥
वासय जनपदमेतं तत् पुण्यजनेश ! चेत् प्रसन्नोऽसि । यद् याच्ञाभङ्गकृतो भवन्ति न भवादृशाः क्वापि ॥७३॥
सोऽप्याह चेत् प्र' त्वं प्रपद्यसेऽस्यात्र तत् प्रकुर्वेऽदः । भ्राताऽपि ते मिलिष्यति मासान्ते तस्थुपेश्चात्र ॥ ७४ ॥

प्रतिपन्ने तेनेति श्रितपरितोषस्तिरोहितो यक्षः । प्रातः प्राप्ताश्च ततः समन्ततः सर्वसामन्ताः ॥ ७५ ॥
अभिषिक्तोऽसौ राज्ये ख्यातो देवप्रसाद इति नाम्ना । पालयति तत्प्रभुत्वं निजसुकृतभरार्जितं सततम् ॥७६॥
भणितोऽहं तेन सखे ! आवाभ्यामर्जितं प्रभुत्वमिदम् । तदनुभवाव उभावप्यथवा भुङ्क्ष्व त्वमेवेदम् ॥ ७७ ॥
भणितं मया वयस्यादिष्टो देवेन सङ्गमो भ्रातुः । मासान्ते तत् तिष्ठ त्वमहं पश्यामि ते बन्धुम् ॥ ७८ ॥
कथय परं निजबन्धोरभिधां किं हेतुना स वा निरगात् । सोऽवोचद् गिरिसुन्दरनामा मे बन्धुरो बन्धुः ॥७९॥
स च पाटच्चरनिग्रहकृताग्रहो निर्गतोऽन्यदा नगरात् । न प्रत्यागात् तमहं विलोकयन्नागतोऽत्र सखे ! ॥ ८० ॥
श्रुत्वेति तदुक्तमहं निरगामथ तद्गवेषणायेतः । पृच्छामि वोऽध्वनीनास्तदिहेदृग्लक्षणः पुरुषः ॥ ८१ ॥
दृष्टः क्वापि भवद्भिर्व्रजामि यत् तत्र तं विलोकयितुम् । गिरिसुन्दरोऽथ नृपस्तः श्रुत्वेत्यन्तर्मनो दध्यौ ॥८२॥ (युग्मम्).
नूनं स एष पथिकप्रोक्तो देवप्रसादपरनामा । देवप्रदत्तराज्यो विराजते रत्नसार इति ॥ ८३ ॥
निश्चित्येति तमध्वगमवक् स भोस्तप्यसे वयस्यकृते । देवप्रसादमीक्षितुमपि यदकुण्ठा ममोत्कण्ठा ॥ ८४ ॥
विनयादिना हरिष्यामि मानसं मानसंकुलं तस्य । नृपतेस्तथा यथाऽसौ नहि स्वबन्धोरपि स्मर्त्ता ॥ ८५ ॥
उक्त्वेति तावुभावपि चलितौ गन्धारपुरवरं प्राप्तौ । गिरिसुन्दरोऽथ मुमुदे निरीक्ष्य तं रत्नसारनृपम् ॥८६॥
कृतरूपपरावर्त्तं गिरिसुन्दरमनुपलक्ष्य भूपोऽपि । प्राह वयस्यं कोऽयं महानुभावः ? स चाचख्यौ ॥ ८७ ॥

देवचरणान् दिदृक्षुर्विद्यासिद्धो मयाऽत्र साकमयम् । आगादथ मासावधिपूर्त्तौ भूपोऽवदन्मित्रम् ॥ ८८ ॥
मासस्तावदतीतो बन्धुर्मे नागतो विसंवदति । किं सुरवचोऽपि तदलं राज्येन च जीवितेन मम ॥ ८९ ॥
एवं विपादविवशं गिरिसुन्दर आह रत्नसारनृपम् । अहमेव सोदरस्ते सुरेण नूनं समादिष्टः ॥ ९० ॥
अहमपि बन्धुनिरीक्षणनिमित्तमवनीतलं परिश्रान्तः । त्वद्दर्शनसंतोषाद् विरतोऽस्म्यधुना परिभ्रमणात् ॥९१॥
त्वमपि विरम मम सङ्गमवशादमुष्माद् विकल्पतो नृपते ! । तुल्यक्रियाप्रवृत्तिः प्रणयस्य हि सारमिदमेव ॥९२॥
श्रुत्वेति रत्नसारो दध्यौ गिरिसुन्दरे यथाप्रेम । स्फुरति तथास्मिंस्तत्कृतरूपान्तर एष मे बन्धुः ॥ ९३ ॥
निश्चित्येत्यवददथो भ्रातः ! किं मां प्रतारयस्यधुना। प्रकटय सौवं रूपं तथाऽकरोत् सोऽपि मुदितमनाः ॥९४॥
अन्यदिने महसेनं पूर्वोदितसहचरं निजे राज्ये । ताभ्यामभिषिच्योक्तं तृतीयबन्धुस्त्वमसि नौ यत् ॥ ९५ ॥
भुङ्क्ष्व तदिदं विभुत्वं चावां पित्रोर्वियोगदावाग्निम् । शमयाव इति भणित्वा चलितौ तौ गुरुचमूयुक्तौ ॥९६॥
पाण्डुपुरं संप्राप्तौ श्रीबलभूपोऽपि शतबलादियुतः । विज्ञाततदागमनोऽभ्यगादथ विस्फुरत्प्रमदः ॥ ९७ ॥
सर्वे महामहेन प्रविविशुरुत्तुङ्गतोरणं नगरम् । निजनिजचरित्रमेतावचोचतां चित्रकृत् पित्रोः ॥ ९८ ॥
श्रीबलभूपस्तत् तनयाद्भुतभाग्यं हृदा समवधार्य । जयनन्दनमुनिमागतमप्राक्षीत् प्राग्भवचरित्रम् ॥ ९९ ॥
अत्याश्चर्यकरं यन्मुमुक्षवे दानमाहितं प्रीत्या । चत्वारोऽपि भवन्तोऽसमशर्मपदं ततो जाताः ॥ १०० ॥

तद्यथा–अत्रैव भरतक्षेत्रे प्रतिष्ठानपुरे पुरे । सुमेघकुलपुत्रस्य विन्ध्यशंवरनामकौ ॥ १०१ ॥

पुत्रौ परेतयोः पित्रोर्दुःस्थौ संप्रस्थितौ ततः । काञ्चनाख्यपुरं क्वाप्यन्तरा कान्दविकापणात् ॥ १०२ ॥

आदाय खाद्यमुद्यानं प्रस्थितौ तावपश्यताम् । मासोपवासिनं साधुं पारणार्थमुपागतम् ॥ १०३ ॥

प्रत्यलाभयतां शुद्धभैक्ष्येण विहिताग्रहौ । परं प्रमोदमापन्नौ प्रपन्नौ बोधिमुज्ज्वलम् ॥ १०४ ॥ (कलापकम्).

अत्रान्तरे तदुद्यानयक्षपूजार्थमागते । नृपपुत्र्यावृद्धिवृद्ध्यभिधाने तदपश्यताम् ॥ १०५ ॥

अहो ! सुदानमनयोरहो ! सुकृतसञ्चयः । अहो ! सुलब्धं जनुरित्यन्वमोदयतां हि ते ॥ १०६ ॥

द्वाभ्यां दानेन चोभाभ्यामनुमोदनया तदा । शुभानुबन्धं सत्पुण्यमर्जितं मार्जितं त्वघम् ॥ १०७ ॥

मुनिदानेन सन्तुष्टौ तौ विन्ध्यशंवराभिधौ । तत्काञ्चनपुरं प्राप्तौ विश्रामाय वने स्थितौ ॥ १०८ ॥

अत्रान्तरे राजपट्टहस्त्याधोरणमुन्मदः । अवधूयाखिलद्रङ्गेऽसमञ्जसमवर्त्तयत् ॥ १०९ ॥

चन्द्रराट् प्राह भोः ! कोऽपि शूरो वीरोऽस्ति विश्रुतः । य एनं मत्तमातङ्गं वशमानयति द्रुतम् ॥ ११० ॥

श्रुत्वेति विन्ध्यस्तत्रेत्यातर्जयत् तमनेकपम् । खेदयित्वा चिरं धृत्वाऽबध्नाच्छालासु हस्तिनाम् ॥ १११ ॥

साधुवादः समुद्भूतः स चाहूतः क्षमाभुजा । उक्तश्च तव सत्त्वेन तुष्टो वृणु वरं स्वयम् ॥ ११२ ॥

विन्ध्योऽपि स्माह सर्वेषां वराणां प्रवरो वरः । यद् देवदर्शनं जातमर्थ्यते किमतः परम् ? ॥ ११३ ॥

अथवा चेल्लभे स्वेष्टं सेवे देवपदांस्तदा । स्वीकृतं तन्नृपेणापि तद्दानाचिन्त्यपुण्यतः ॥ ११४ ॥
ततो नृपं सिषेवाते तौ द्वावपि समाहितौ । कालेन कालधर्मं तौ प्रतिपद्य समाधिना ॥ ११५ ॥
सञ्जातौ युग्मिनौ देवकुरुष्वेतावुभावपि । त्रिगव्यूततनू पल्यत्रितयप्रमितायुषौ ॥ ११६ ॥ (युग्मम्).
दानानुमोदनापुण्यान्नृपपुत्र्यावपीह ते । तयोरेव प्रियात्वेन तत्रैवोत्पत्तिमापतुः ॥ ११७ ॥
तद्युग्मियुगलं तत्राऽनुभूय सुखमद्भुतम् । सौधर्मत्रिदिवं प्रापद् गतापत् पापवर्जितम् ॥ ११८ ॥
ततश्च्युत्वा पाण्डुपुरे महाबलनरेशितुः । विलासवत्यां प्रेयस्यामभूतां तनयावुभौ ॥ ११९ ॥
प्राक् प्रेयस्योस्तयोरेका पद्मखण्डपुरे वरे । महसेननरेशस्य दुहिताऽभूत् सुलक्ष्मणा ॥ १२० ॥
द्वितीया तु विजयपुरे राज्ञः पद्मरथस्य च । लक्ष्मणा नाम पुत्र्यासीद् दासीकृतसुराङ्गना ॥ १२१ ॥
श्रुत्वा सुलक्ष्मणा साऽथ मागधाद् गुणकीर्त्तनम्। श्रीबले सानुरागाऽभूत् परस्मिन्नपि लक्ष्मणा ॥१२२॥
अत्रान्तरेऽथ श्रीगुप्तसिद्धपुत्रेण सोऽर्थितः। विद्यासाधनसाहाय्ये श्रीबलो विलसद्बलः ॥ १२३ ॥
प्रतिपन्नेऽमुना भूतेष्टायां पितृवने निशि । हरन् श्रीगुप्तमुच्चण्डः पिशाचो ददृशे महान् ॥ १२४ ॥
धृतासिस्तमनुक्रामन् श्रीबलोऽगान्महाटवीम्। पिशाचोऽन्तरधात् प्रातः श्रीगुप्तोऽपि न दृश्यते ॥ १२५ ॥
विषण्णः श्रीबलोऽन्वेष्टुं श्रीगुप्तं प्राचलद् द्रुतम् । पाशं क्षिप्त्वा गले तावद् रुदन्तीं कामपि स्त्रियम् ॥ १२६ ॥

निरीक्ष्य तत्र कान्तारे यावद् विस्मयमावहन्। स्थितोऽस्त्यवहितीभूय तावच्छुश्राव तद्गिरम् ॥ १२७ ॥ (युग्मम्.)
शृण्वन्तु लोकपालाद्याः पतिर्यत्र जन्मनि। श्रीबलो न भवेद् मेऽसौ भूयात् तदन्यजन्मनि ॥ १२८ ॥
इत्युल्लापपरा बाला तत्र स्वं सहसाऽमुचत्। चिच्छेद श्रीबलः पाशं स्वं चोपालक्षयंस्तदा ॥ १२९ ॥
ततः प्रमुदिता लज्जाऽवनम्रवदनाऽथ सा। स्ववृत्तान्तमशेषं तं श्रीबलाय न्यवेदयत् ॥ १३० ॥
पद्मखण्डपुरे पुत्री महसेनस्य भूपतः। नाम्ना सुलक्ष्मणा पित्राऽदायि श्रीबलभूभुजे ॥ १३१ ॥
रममाणाऽन्यदोद्याने जह्रे केनापि पापिना। खेचरेण रुदन्त्यत्र मुक्ताऽस्म्येषा महावने ॥ १३२ ॥
स चापराजितां विद्यां साधयन्नस्ति खेचरः। लब्धावसरया मृत्यौ मया व्यवसितं तदा ॥ १३३ ॥
एवं मिथः समुल्लापे वर्त्तमाने तयोस्तदा। स श्रीगुप्तः सिद्धपुत्रस्तत्रागादप्रतर्कितः ॥ १३४ ॥
तं वीक्ष्य श्रीबलोऽवोचत् सिद्ध ! क्रुद्धपिशाचतः। छुटितोऽसि कथं सोऽपि व्याजहार नृपाङ्गजम् ॥१३५॥
मित्र ! व्यामोहितोऽसि त्वं माययाऽनेन यत् तदा। सिद्धविद्योऽप्यभूवं त्वद्वियोगात् किन्तु दुःखभाक् ॥१३६॥
त्वत्सत्त्वरञ्जितेनापि पिशाचेन प्रियाकृते। त्वमानीय विमुक्तोऽसि विलम्बं मा कुरुष्व तत् ॥ १३७ ॥
गान्धर्वेण विवाहेन प्रियापाणिग्रहं कुरु। तथाकृते पाण्डुपुरं प्राप्ताः सर्वेऽपि विद्यया ॥ १३८ ॥
अथेदमखिलं वृत्तं पद्मखण्डपुरेशितुः। महसेननरेशस्य ज्ञापयामास पार्थिवः ॥ १३९ ॥

महसेनोऽपि भूभर्त्रा श्रुत्वा तच्चरितं मुदा । सचिवान् प्रेष्य तत्पाणिग्रहोत्सवमचीकरत् ॥ १४० ॥
इतो भ्रातरमन्वेष्टुं जनकानुज्ञयाचलत् । बली शतबलोऽपश्यत् तापसाश्रममग्रतः ॥ १४१ ॥
रुदन्तीस्तापसीस्तत्र दृष्ट्वाऽपृच्छत् कुमारराट् । ता अप्याहुर्महद् जज्ञे प्रदेशेऽत्रासमञ्जसम् ॥ १४२ ॥
तद् दृष्ट्वा कृपया जाता वयं शोकातुरास्ततः । तदेतत् किं कुमारोक्ते ऊचुस्ता अपि तत्पुरः ॥ १४३ ॥
अद्यात्र नन्दिनी पद्मरथस्यात्रासिता निशि । लक्ष्मणाख्या शतबलं परिणेतुं कृताग्रहा ॥ १४४ ॥
पित्राज्ञया पाण्डुपुरं प्रतस्थौ सा बलान्विता । किरातविषयेशेनार्थिता प्राक् कुञ्जरेण सा ॥ १४५ ॥
तामनासादयन् सोऽथ छलं पश्यन्निरन्तरम् । प्रदेशेऽत्र समागत्य दुर्बुद्धिः सहसाहरत् ॥ १४६ ॥
निराशा सा शतबले वराकी मृत्युमाप्स्यति । इति संभावयन्त्योऽद्य शोकाविष्टा अभूर्वयम् ॥ १४७ ॥
श्रुत्वेति तं शतबलोऽन्वधावत् सबलो रिपुम् । कुञ्जरं जर्जरं कृत्वा तत्क्षणाल्लक्ष्मणां ललौ ॥ १४८ ॥
प्रशस्तेऽह्नि पाण्डुपुरं प्राप्य पाणिग्रहं व्यधात् । लक्ष्मणाया नृपाः सर्वे तद्विवाहमहं व्यधुः ॥ १४९ ॥
चत्वारोऽपि मुनिदानादवापुः सुखमद्भुतम् । जातिस्मरणतस्तेऽपि सर्वे प्राग्वृत्तमस्मरन् ॥ १५० ॥
अथ पृष्टो मुनीन्द्रस्तैरपहृत्य सुलक्ष्मणाम् । तस्य विद्याधरस्याभूत् को वृत्तान्तस्ततो वद ॥ १५१ ॥
भगवानाह स भ्रष्टविद्यः कष्टशतं व्रजन् । कदाचिन्मुनिवाक्यानि श्रुत्वा बुद्धोऽग्रहीद् व्रतम् ॥ १५२ ॥

क्रमेणाष्टविधं कर्म दग्ध्वा ध्यानमयाग्निना । निर्मलं केवलं प्राप्य निर्वृतोऽपि क्रमादसौ ॥ १५३ ॥
इति श्रुत्वा मुनेर्वाक्यं नृपः संविग्नमानसः । राज्ये शतबलं न्यस्यन् व्रतार्थं यावदुत्थितः ॥ १५४ ॥
तावच्छतबलोऽवोचत् ताताहमपि संयमम् । त्वया सहाङ्गीकर्त्ताऽस्मि निश्चयोऽयं ममाभवत् ॥ १५५ ॥ (युग्मम्.)
तन्निर्बन्धमथावेत्य स्वराज्ये गिरिसुन्दरम् । यौवराज्ये रत्नसारमभिषिच्य महामहम् ॥ १५६ ॥
श्रीबलशतबलावप्युभौ जातौ महामुनी । असिधाराग्रनिशितं पालयामासतुर्व्रतम् ॥ १५७ ॥
अथान्यदा राज्यरमां भुञ्जानो गिरिसुन्दरः । स्वप्ने कल्पद्रुशाखाग्रासीनमात्मानमैक्षत ॥ १५८ ॥
प्रत्यूषे मङ्गलातोद्यैः प्रबुद्धोऽथ धराधवः । महत् स्वप्नफलं ध्यायन् प्रापोद्याने जिनालयम् ॥ १५९ ॥
नत्वार्हन्तं वहिश्चूततले वीक्ष्य महामुनिम् । पञ्चधाभिगमैर्नत्वाशृणोत् तद्धर्मदेशनाम् ॥ १६० ॥
संवेगरङ्गमापन्नः प्रोवाच धरणीधवः । रत्नसारकुमारं तं व्रताभिप्रायमात्मनः ॥ १६१ ॥
सोऽपि प्रोत्साहयामास तं स्वयं व्रतकाङ्क्षया । निवेश्य राज्ये सचिवानुज्ञया सुरसुन्दरम् ॥ १६२ ॥
जयनन्दगुरूपान्ते प्रव्रज्योभौ यथाविधि । ग्रैवेयके नवमकेऽभूतामेतावुभौ सुरौ ॥ १६३ ॥

इति पं० श्रीसत्यराजगणिविरचिते श्रीपृथ्वीचन्द्रमहाराजर्षिचरिते गिरिसुन्दररत्नसार-
महर्षिचरितमष्टमं भवग्रहणम् ।

---

## नवमो भवः ।

अथ वङ्गाभिधे देशे ताम्रलिप्ती महापुरी । सुमङ्गलस्तत्र नृपः श्रीप्रभा तस्य वल्लभा ॥ १ ॥
अथ ग्रैवेयकात् च्युत्वा गिरिसुन्दरनिर्जरः । तस्याः कुक्षाववातारीत् ध्वजस्वप्नाभिसूचितः ॥२॥
काले सामूत तनयं प्राचीव दिवसेश्वरम् । स्वप्नानुसारान्नाम्ना स कनकध्वज इत्यभूत् ॥ ३ ॥
रत्नसारसुरोऽप्येष च्युत्वा तस्यैव भूपतेः । स्वयंप्रभाभिधादेव्यां पुत्रत्वेनोदपद्यत ॥ ४ ॥
जयसुन्दर इत्याख्या निर्ममेऽस्यापि भूभुजा । वर्द्धमानाववाप्तौ तौ पावनं यौवनं वयः ॥ ५ ॥
प्रापतुस्तौ परं प्रेम प्राग्भवाभ्यासतो मिथः । न सा कला न सा विद्या यामधीतौ न तौ जवात् ॥६॥
अन्यदा सुरवेगाह्वसूरवेगाह्वखेचरौ । राधावेधकृताभ्यासौ तौ कुमारावपश्यताम् ॥ ७ ॥
प्रसूनवर्षं तदुपर्याधाय खेचरौ गतौ । अहो ! सुरार्चितावेतावित्यसौ पप्रथे कथा ॥ ८ ॥
साधुवादमिति श्रुत्वा परितुष्टः सुमङ्गलः । आत्मानं पुत्रिणां धुर्यं मेने स विकसन्मनाः ॥ ९ ॥

अथान्यदांवरे श्रुत्वा वर्यतूर्यमहारवम् । यावद् विस्मितचित्तोऽभूत् सदःस्थो भूमिवासवः ॥ १० ॥
आगातां नभसस्तावत् सभायां खेचरावुभौ । प्रोचतुस्तौ नृपं नत्वा देव ! - वैताढ्यपर्वते ॥ ११ ॥
सुरवेगः सूरवेगश्चापरापरमातृजौ । बन्धू पालयतः श्रेणिद्वयखेचरवैभवम् ॥ १२ ॥ (विशेषकम्.)
शतं शतं च कन्यानामभवत्तु तयोर्द्वयोः । अन्यदा त्वत्सुतौ ताभ्यां राधावेधे निरीक्षितौ ॥ १३ ॥
तत्कलाकौशलप्रीतौ पुष्पवृष्टिं वितेनतुः । तौ चैतद्गुणमाहात्म्यं स्वपर्षदि शशंसतुः ॥ १४ ॥
तद्गुणश्रवणात् कन्यास्ताः सर्वा अपि चैतयोः । कुमारयोरुपर्युच्चैर्बबन्धू रागमुत्कटम् ॥ १५ ॥
अथ तैः खेचरैः सर्वैः कन्याभिश्चान्वितौ च तौ । समायातां विवाहाय प्रागावां महितौ ततः ॥ १६ ॥
ततः प्रमुदितो भूपोऽभिगम्य खेचरेश्वरौ । स्थानाशनाद्यैः सत्कृत्य तद्विवाहमवीवृतत् ॥ १७ ॥
सुरवेगोऽत्र कनकध्वजायादात् सुताशतम् । सूरवेगोऽपि च जयसुन्दराय शतं सुताः ॥ १८ ॥
अन्या अपि नृपकन्या बह्वीस्तौ परिणिन्यतुः । प्रत्येकमेतयोर्जाता वधूपञ्चशती ततः ॥ १९ ॥
अथान्यदा शुभे घस्रे सुमङ्गलधराधवः । निवेश्य राज्ये कनकध्वजं ज्यायांसमङ्गजम् ॥ २० ॥
प्रवव्राज स्वयं धर्मसागराचार्यसन्निधौ । आराधयत् सुचरणविधिं सत्त्वैकसेवधिः ॥ २१ ॥
कनकध्वजभूजानिः कुमारो जयसुन्दरः । उभावङ्गीकृतागारिधर्मौ पालयतो महीम् ॥ २२ ॥

अथान्यदा नृपो देशदर्शनालोककौतुकी । चतुरङ्गचमूयुक्तो बभ्राम महिमण्डलम् ॥ २३ ॥
ग्रामाकरपुरादीनि भ्रमन्नृपशतानतः । साकेतनगरं प्रापत् क्रमेण स्वःपुरोपमम् ॥ २४ ॥
तत्रोद्याने जिनगृहे नत्वा श्रीवृषभप्रभुम् । निर्गतो द्रुतलासीनं स मुमुक्षुमवन्दत ॥ २५ ॥
विधाय देशनां तत्र विरते मुनिपुङ्गवे । ततः कपिञ्जलो नाम पुरोधा अभ्यधात् क्रुधा ॥ २६ ॥
बुधैर्विधीयते धर्म इति शर्मनिबन्धनम् । तदेतच्चण्डपाखण्डमुण्डतुण्डैकताण्डवम् ॥ २७ ॥
तथाहि—सर्वमेव भवेज्जीवसद्भावे स च नास्ति यत् । प्रत्यक्षादिप्रमाणैश्चाग्राह्यत्वेन तथा ह्ययम् ॥ २८ ॥
स्तंभकुंभांभोरुहादिवच्चक्षुर्भ्यां न हीक्ष्यते । श्रवसा वेणुपणवक्कणवच्छ्रूयते च न ॥ २९ ॥
घ्राणेन गृह्यते नापि गन्धधूल्यादिगन्धवत् । मधुराम्लादिरसवल्लिह्यते न च लोलया ॥ ३० ॥
न परिस्पृश्यते शीतोष्णादिस्पर्शवदन्वहम् । तस्माज्जीवो नास्त्येवाक्षपञ्चकागोचरत्वतः ॥ ३१ ॥

नास्ति जीवः किन्तु पञ्चभूतपरिणाम एव नरतिर्यक्शरीराणां व्यवहार इति तदुक्ते गुरवोऽवोचन्, भो भद्र ! तव जीवाभावसाधकमेतद्विज्ञानं विद्यमानमविद्यमानं वा ? न तावद् विद्यमानममूर्त्तत्वेन, करणपञ्चकाग्राह्यत्वात् । अविद्यमाने च तस्मिन् जीवः सिद्ध एव प्रतिषेधकाभावात् । अन्यच्च वधिरान्धादिभिरनुपलभ्यमाना अपि सन्ति रूपादि-पदार्थाः तदन्येषामुपलंभाच्च एवं छद्मस्थाप्रत्यक्षोऽपि ज्ञानातिशयसंपन्नपरममुनिप्रत्यक्षोऽस्त्येव जीवः ।

तथा—अनिन्द्रियगुणं जीवमग्राह्यं चर्मचक्षुषाम् । सिद्धाः पश्यन्ति सर्वज्ञा ज्ञानसिद्धाश्च साधवः ॥ ३२ ॥

तथा भद्र ! य एष भूतपरिणामश्चेतनाव्यवहारस्तत्र तानि भूतानि चेतनान्यचेतनानि वा ? यदि चेतनानि तदा सिद्धा एकेन्द्रियादयो जीवाः अथाचेतनानि तत् कथं तेषां समुदायेनापि चेतनापरिणामः संभवति ? यद्येषु प्रत्येकं नास्ति तेषां समुदायेऽपि नास्ति तैलमिव वालुकाघाणक, न च वक्तव्यं जलगुडतन्दुलादिषु प्रत्येकमविद्यमानमपि संयोगेन मदजननसामर्थ्यमुपलभ्यते । प्रत्येकमपि तेषां बलवृद्धिजनकत्वेन मदलेशहेतुत्वात्, इत्यादि सविस्तरमुक्ते मुनिपतिना प्रत्युत्तरमलभमानः स्थितस्तूष्णीकः कपिञ्जलः । पुनर्भणितं गुरुणा, भद्र ! न तवैष स्वाभाविकः कुबोधः किंतु त्वं पूर्वदुष्कृतोपनतजात्यन्धभावेन मिथ्यात्वोदयप्रच्छादितभयेन केशवाभिधानमातुलेन दुःशिक्षितोऽसि ।

अथ पुरुषोत्तमभूपो नत्वा मुनिपं व्यजिज्ञपच्चेति। भगवन् ! किमनेन कृतं पूर्वं यस्योदियाय फलम् ! ॥ ३३ ॥
मुनिराख्यदत्र भरते आसीद् दासीकृतारिनिकुरंबः। वीराङ्गद इति नृपतिर्निजप्रतापाधरिततपनः ॥ ३४ ॥
सकलगुणसङ्गतोऽपि द्विजेश इव लक्ष्म नो जहौ जातु । पापर्द्धिदूषणमसौ चलितस्तद्धेतवेऽन्येद्युः ॥ ३५ ॥
मृगयाकृते प्रवृत्ते निहन्यमानेषु रङ्कुशशकेषु । एकस्तु कोलबालः क्वापि निकुञ्जे निलीयास्थात् ॥ ३६ ॥
स च तद्वधाय विशिखं ततश्च चिक्षेप निःकृपो भूपः। यावत् पश्यति गत्वा त तावद् ध्यानिनोऽत्र कस्यापि ॥३७॥
साधोः पदान्तरे तं पतितमिषुं वीक्षते न तं च किरिम् । संभ्रान्तोऽसौ दध्यावहो ! महादुष्टचरितोऽहम् ॥३८॥ (युग्मम्.)

मुनिघातपातकेन स्पृष्टोऽस्मि मनाग् न चेति निध्यायन्। मुनिपादपङ्कजेषु न्यपतद् विनयात्रनतकायः ॥ ३९ ॥
क्षमयामास मुनिवरं पापेन मया कृतोऽयमपराधः। तन्मे प्रसीद यद्भवदङ्के क्षिप्तं मयास्ति शिरः ॥ ४० ॥
इति चाटुपरो भूपो ध्यानं संपूर्य साधुना भणितः। माभैर्भवल्लभ! यत् सरोषतोषा न खलु मुनयः ॥ ४१ ॥
नवरं शृणु मद्वचनं करिकर्णचलेषु भोगयोगेषु। पापारंभेषु रतिं कर्तुं क्षणमपि न ते युक्तम् ॥ ४२ ॥
इति मुनिवचसा बुद्धो लब्ध्वा बोधिं दधौ स गृहिधर्मम्। वीराङ्गदभूमिधवः स्वमनो निर्माय निर्मायम् ॥ ४३ ॥
तत्र जिनप्रियनामा श्राद्धो नृपतेः ससर्ज साहाय्यम्। जिनपूजादिषु तेनामन्यत तं गुरुधिया भूपः ॥ ४४ ॥
अस्ति च तत्रैव पुरे मोहननामा च नामभृच्छ्राद्धः। श्रावककुलानुजीवी जिनप्रियस्तेन भणितोऽथ ॥ ४५ ॥
दर्शय मे तं नृपतिं यत्तन्निश्रास्थितोऽस्मि निश्चिन्तः। तेनापि तथा विहिते राज्ञा पूजादिषु नियुक्तः ॥ ४६ ॥
नृपसंमत इति जातः शेषजनस्यापि गौरवस्थानम्। यत् स्वीकृतो महद्भिर्महीतले को न महनीयः ॥ ४७ ॥
राज्यार्हमन्यदा वीरसेनमङ्गजमनुस्मरन् भूपः। निर्विण्णकामभोगो विरचितवरचरणपरिणामः ॥ ४८ ॥
नृपेण मोहनः प्रोक्तो धर्माचार्यं गवेषय। येन तच्चरणोपान्ते प्रपद्ये संयमं मुदा ॥ ४९ ॥
निदध्यौ मोहनोऽप्येवं ममैनं भूपतिं विना। न सुखाजीविका तेन शठोत्तरमदोऽवदत् ॥ ५० ॥
देव! संप्रति कोऽप्यत्र दृश्यते न तथाविधः। गुरुर्यं पोतवत् श्रित्वा तीर्यते भवसागरः ॥ ५१ ॥

दुष्करं श्रमणत्वं च मनः पवनचञ्चलम् । तद् वरं गृहिधर्मोऽयं यः समाचर्यते त्वया ॥ ५२ ॥
विराधितव्रतानां स्यादनन्तो भववारिधिः । भ्रष्टस्य मञ्चकात् पीडा न तथा स्याद् यथा गिरेः ॥५३॥
अतएव भवोद्विग्नोऽप्यङ्गीकुर्वे न संयमम् । पौषधाद्यैर्यथाशक्ति गृहिधर्मं समाश्रये ॥ ५४ ॥
तमवज्ञाय भूपोऽथ सद्योऽप्राक्षीज्जिनप्रियम् । स च प्रोत्साहयामास संयमे वासवं भुवः ॥ ५५ ॥
इतश्च जयकान्ताह्वो मुनिस्तत्रागमत् तदा । समं जिनप्रियेणोर्वीपतिः संयममाददे ॥ ५६ ॥
निरतीचारचारित्रमनुपाल्यायुषः क्षये । महाशुक्रे हरेः सामानिकोऽभूद् भूपतिः सुरः ॥ ५७ ॥
महर्षीणामथ च्छिद्रान्वेषी द्वेषीव मोहनः । दोषवादी प्रमादी चाज्ञानी मानी च सर्वदा ॥ ५८ ॥
विन्ध्याद्रौ तुङ्गमातङ्गो मृत्वा कालेन सोऽभवत् । दत्तः स शबरैर्बद्ध्वा मथुरेशनरेशितुः ॥ ५९ ॥
प्राग्जन्माभ्यासतः साधुप्रत्यनीकस्तदाप्यभूत् । वीक्ष्योद्यानेऽन्यदा साधून् क्रुधा तानभिधावितः ॥६०॥
पतितोऽगाधगर्त्तायां मृत्वा श्येनोऽभवत् ततः । ततस्तृतीयं नरकं ततः सिंहोऽभवद् वने ॥ ६१ ॥
ततोऽपि द्वितीयश्वभ्रे सागरत्रयसंमितम् । प्रपूर्यायुर्महादुःखात् तत उद्धृत्य सोऽङ्गभृत् ॥ ६२ ॥
श्रीधनाह्वपुरे कामदत्ताख्यवणिजो गृहे । वसुदत्ताह्वकान्तायां पुत्रत्वेनोदपद्यत ॥ ६३ ॥
सुमित्रनामा तारुण्यं वर्द्धमानः क्रमादगात् । प्राच्यकर्मानुभावेन दुःखदौर्गत्यभागभूत् ॥ ६४ ॥

जिनप्रियसुरोऽप्येष तस्मिन्नेव पुरोत्तमे । विनयन्धरसंज्ञस्य महेभ्यस्य सुतोऽभवत् ॥ ६५ ॥
गुणन्धराभिधः सोऽपि क्रमात् संप्राप यौवनम् । प्राग्भवाभ्यासतः प्रेम सुमित्रे तस्य चाभवत् ॥ ६६ ॥
पञ्चत्वं प्राप्तयोः पित्रोरन्यदा स गुणन्धरः । क्षीणवित्तः क्रमेणाग्रमभूत् परिभवास्पदम् ॥ ६७ ॥
गुणन्धरोऽन्यदा मित्रमूचे रुचिरया गिरा । गत्वा देशान्तरं कुर्वो यदावां द्रविणार्जनम् ॥ ६८ ॥
शाठ्यवृत्त्या सुमित्रोऽपि प्रत्यपद्यत तद्वचः । चलितौ पण्यमादाय परदेशं धनैषिणौ ॥ ६९ ॥
उल्लङ्घ्यानेकविषयान् प्रापतुस्तौ महाटवीम् । सार्थे आवासिते तौ च भ्रेमतुः कौतुकाद् वनम् ॥ ७० ॥
उदुंबरस्य च्छायायां शयितौ पल्लवासने । गुणन्धरस्य निद्राऽऽगादितरस्तु पलायितः ॥ ७१ ॥
आत्तो गुणन्धरो भिल्लैः स च सार्थपुरो वदन् । पलायत जना इत्युच्चरन् सार्थमचालयत् ॥ ७२ ॥
स्वयं तद्विभवस्वामी जातश्छलविधानतः । आलोकितोऽस्म्यहं स्निग्धदृशा संप्रति वेधसा ॥ ७३ ॥
इति सञ्चिन्तयन्नेष यावदास्ते मुदास्पदम् । तावद् दावशिखी मध्यन्दिने व्यापन्नभःस्तलम् ॥ ७४ ॥
दग्धानि सर्वभाण्डानि नष्टाः सर्वे दिशो दिशि । जीवमादाय नष्टस्वः स पलायिष्ट दुष्टहृत् ॥ ७५ ॥
क्षुत्तृट्पीडातपक्लान्तः सुमित्रोऽथ गिरेस्तटम् । प्रयातस्तत्र शबरैर्बद्ध आर्द्रेण चर्मणा ॥ ७६ ॥
त्रिरात्रादथ मुक्तस्तैर्भिक्षावृत्त्याभ्रमद् भुवम् । पापानां कर्मणां यस्माद् भवेदेवंविधा गतिः ॥ ७७ ॥

तथा विश्वस्तसुप्तोऽसावितश्च स गुणन्धरः । प्रबोध्य पल्लीपतिनाऽपृच्छ्यत प्रथितां कथाम् ॥ ७८ ॥
यथास्थितमथाचख्यौ वृत्तं पल्लीपतेः पुरः । सुमित्रस्तत्र सर्वत्र शोधितस्तेन यत्नतः ॥ ७९ ॥
तमपश्यन् दधद् दुःखं पल्लीशस्तमबूबुधत् । चक्रे चातुच्छवात्सल्यं तस्य स्थानाशनादिभिः ॥ ८० ॥
एवं तत्रेष्टगोष्ठीभिर्नीताः कत्यपि वासराः । सहस्रवेधिपल्लीशस्तस्मै चादान्महारसम् ॥ ८१ ॥
अवदत् स च तं तारत्रपुताम्रायसामपि । अक्लेशेनास्य लेशेन जायते हेमता क्षणात् ॥ ८२ ॥
अन्यदापृच्छ्य पल्लीशं रसालाबुसमन्वितः । तत्साहाय्याद् ययौ वीरपुरं वीरशिरोमणिः ॥ ८३ ॥
तत्रासौ सार्थमार्गावलोकनव्यापृतो निशि । तिष्ठतीष्टवियोगार्त्तो यावत् तावदथान्यदा ॥ ८४ ॥
क्षुत्तृषार्त्तः सुमित्रोऽस्य दुर्दशो दर्शनं गतः । गुणन्धरस्य स शठः कण्ठमाश्लिष्य चारुदत् ॥ ८५ ॥ (युग्मम्)
आश्वास्य पृष्टो वृत्तान्तमवदत् सोऽपि तत्पुरः । तत्रागता तदा निद्रा भिल्लधाटी तदोत्थिता ॥ ८६ ॥
बद्धो भिल्लैरहं नष्टोऽवसरं प्राप्य कर्हिचित् । अन्वेषयंस्त्वामत्रागां दिष्ट्याऽद्य मिलितोऽसि यत् ॥ ८७ ॥
रसलाभावधि स्वीयं वृत्तमाख्यद् गुणन्धरः । तस्मै स रसमादित्सुः शठः स्फुटमदोऽवदत् ॥ ८८ ॥
रसस्यालाबु कुत्रापि वयस्य ! न्यस्य निश्चितम् । आवां देशान्तरं कुर्वो द्रष्टुं विविधकौतुकम् ॥ ८९ ॥
इति निश्चित्य तौ पण्यान्यादाय विविधान्युभौ । ताम्रलिप्तीं गतौ तत्र भूयाल्लाभोऽभवत् तयोः ॥ ९० ॥

ततोऽपि यानमारुह्य चीनद्वीपं प्रतस्थतुः । भूरिभाण्डान्यथादाय चलितौ निजमण्डलम् ॥ ९१ ॥
तीर्णप्राये पयोराशौ सुमित्रो दध्यिवानिति । गुणन्धरेणामुनाहं महामि पयसां निधिम् ॥ ९२ ॥
भवामि सर्वविभवविभुरित्युत्थितो निशि । तनुचिन्ताकृते यानपर्यन्तस्थायिनं च तम् ॥ ९३ ॥
निरीक्ष्याब्धौ क्षिपेद् यावद् तावत् स्वकर्मदोपतः । स एव पतितोऽम्भोधौ ही पापानां कुतः सुखम् ॥९४॥
हा हा मम वयस्यस्य किमकाण्डेऽप्यदोऽभवत् । तं तथावस्थमालोक्य विललाप गुणन्धरः ॥ ९५ ॥
शोचन्नेवं क्रमेणागात् ताम्रलिप्त्यां गुणन्धरः । ज्ञानवांस्तत्र धर्मर्षिस्तमेवं प्रत्यबूबुधत् ॥ ९६ ॥
यत्कृते तप्यसे वत्स ! तस्य त्वं शृणु चेष्टितम् । सुप्तो मुक्तो वने येन कुमित्रेण धनेच्छया ॥ ९७ ॥
येनाब्धौ क्षेप्तुमिष्टस्त्वं तत्रापतत् स एव तु । आपत्सु पान्ति पुण्यानि प्राग्भवोपार्जितान्यहो ! ॥९८॥
जिनप्रिये मोहनस्य मात्सर्यं यत् पुराप्यभूत् । तदभ्यासात् सुमित्रस्य द्वेष आसीद् गुणन्धरे ॥ ९९ ॥
कृतानतिरथापृच्छन्मुनिचन्द्रं गुणन्धरः । प्रभो ! सोऽब्धौ तदा मृत्वा सुमित्रः कोदपद्यत ? ॥ १०० ॥
भगवानाह साकेतपुरे विप्रसुतोऽभवत् । जात्यन्धः केशवो नाम स संप्रत्यस्ति दुःखभाक् ॥ १०१ ॥
गुणन्धरो भवोद्विग्नो मुनेस्तस्य पदान्तिके । श्रामण्यं प्राप्य चाधीत्य जातोऽनूचानपुङ्गवः ॥ १०२ ॥
सोऽहं युष्मत्प्रबोधाय विहरन्निह चागमम् । आख्यातमेतदाख्यानं केशवस्य द्विजन्मनः ॥ १०३ ॥

वीराङ्गदनृपोऽप्यष सप्तमस्वर्गतश्च्युतः । जातोऽत्रैव पुरे राजा पुरुषोत्तमसंज्ञकः ॥ १०४ ॥
श्रुत्वेति वसुधाधीशो वाचं वाचंयमेशितुः । संविग्नो विषयोद्विग्नोऽभ्यार्थयत् संयमश्रियम् ॥ १०५ ॥
बोधिं प्राप्य मुनेर्वाचा प्राञ्जलः स कपिञ्जलः । प्राह प्रभो ! ममापि त्वं देहि देहिहितं व्रतम् ॥ १०६ ॥
पुनः पप्रच्छ पुरुषोत्तमः पृथ्वीपतिर्मुनिम् । कपिञ्जलेन भगवन् ! किमाचीर्णं पुरा भवे ? ॥ १०७ ॥
गुरुराख्यद् वसन्ताख्यपुरेऽसौ श्रावकोऽभवत् । शिवदेवाभिधो ब्रह्मचार्यणुव्रतधारकः ॥ १०८ ॥
व्युद्ग्राहितो मोहनेन मात्सर्यं मुनिषु व्रजन् । मृत्वा किल्विषिको जातश्चण्डालेषु ततोऽभवत् ॥१०९॥
ततो धूमप्रभापृथ्व्यां नारको निर्गतस्ततः । जातः कपिञ्जलस्तेन प्रीतिरस्यास्ति केशवे ॥ ११० ॥
अतस्तद्वचसा त्यक्त्वा धर्ममेष कुलागतम् । शिश्राय चार्वाकमतं कुसङ्गो ह्यथ हानिकृत् ॥ १११ ॥
ऋजुतावान् निजां जातिं स्मृत्वा बुद्धः कपिञ्जलः । केशवस्तु चिरं घोरं संसाराब्धिं भ्रमिष्यति ॥११२॥
इति श्रुतिभ्यामाकर्ण्य पुरुषोत्तमभूपतिः । कपिञ्जलाद्यैर्बहुभिः प्रतिपन्नोऽनगारताम् ॥ ११३ ॥
इति कनकध्वजराजा श्रुत्वा दृष्ट्वा च तच्चरित्राणि । संविग्नो निजराज्येऽभिषिच्य पुत्रं पुरुषचन्द्रम् ॥११४॥
जयसुन्दरेण साकं संयममादाय निष्कलङ्कतया । प्रतिपाल्य चिरं मृत्वा विजयविमानेऽभवत् त्रिदशः ॥११५॥
तत्र द्वात्रिंशन्मितसागरसङ्ख्यायुषौ निरस्तरुषौ । अहमिन्द्रतासुखजुषौ तौ समयं चात्यवाहयताम् ॥११६॥

इति पं० श्रीसत्यराजगणिविरचिते श्रीपृथ्वीचन्द्रमहाराजर्षिचरिते कनकध्वजराजर्षिचरितं नवमं भवग्रहणम् ।

## दशमो भवः ।

अथाङ्गदेशे चंपायां जयो नाम नराधिपः । तस्य प्रियमती देवी देवीव भुवमागता ॥ १ ॥
मिथो घनप्रेमतन्तुस्यूतयोरिव चैतयोः । रतयोरार्हते धर्मे जग्मुः कत्यपि वासराः ॥ २ ॥
च्युत्वा विजयतोऽथासौ कनकध्वजनिर्जरः । जातः प्रियमतीदेव्यां पुत्रत्वेन शुभोदयः ॥ ३ ॥
ततः प्रियमती देवी सुप्ता स्वप्नमगादिति । निजसिंहासनेऽध्यास्य राज्ञा मूर्ध्नि मम स्वयम् ॥ ४ ॥
मणिस्वर्णमयो भास्वान् मुकुटो विनिवेशितः । प्रबुद्धा सा नृपायाख्यत् तं स्वप्नं जगदुत्तमम् ॥५॥ (युग्मम्.)
सोऽप्याह स्म महाभूपः सूनुस्ते भविता प्रिये! । ग्रीष्मर्त्तावन्यदा भूपः प्रियमत्या समन्वितः ॥६॥
विधायोद्यानवापीषु जलकेलिमहं चिरम् । ततो रसालवृक्षाधो न्यषीदज्जयभूपतिः ॥ ७ ॥ (युग्मम्)
विपञ्चीं वादयन्तं तं वीक्ष्य काचित् सुरी वने । सौभाग्यातिशयेनाभूद् भूपरूपेऽनुरागिणी ॥८॥
परस्त्रीविमुखेनाथ निषिद्धा भूधवेन सा । वशा गलत्प्रेमपाशा निराशा विवशा गता ॥ ९ ॥
प्रस्तावं पुनरासाद्य सा सुरप्रमदान्यदा । कृत्वा प्रियमतीरूपं पुनर्भूपं समागता ॥ १० ॥

न्यायिनाज्ञायि राज्ञापि नेयं प्रियमती प्रिया । किन्तु सा व्यन्तरी मन्ये तद्रूपेणात्र चागता ॥ ११ ॥
ध्यात्वेति मुष्टिप्रहतां विहस्तां च विधाय ताम् । निरस्तां स्वेप्सितप्राप्तेर्नृपतिर्निरवासयत् ॥ १२ ॥
देवीसद्मगतो भूपोऽप्यपश्यंस्तत्र तां प्रियाम् । विषण्णोऽचिन्तयज्जह्रे हा केनापि मम प्रिया ॥ १३ ॥
शोधयन्नपि सर्वत्र यावन्नाप्नोति स प्रियाम् । जग्राह तावन्नृपतिः स्वचित्ते चेत्यभिग्रहम् ॥ १४ ॥
प्रियासमागमादूर्ध्वं न स्थास्याम्येष सद्मनि । प्रतिपत्स्ये परिव्रज्यां त्यक्त्वा राज्यधनादिकम् ॥ १५ ॥
घोरारण्ये विमुक्ताथ व्यन्तर्या प्रियमत्यसौ । व्याघ्रसिंहवराहादिभयवेपितमानसा ॥ १६ ॥
विलपन्ती प्रियमती चलन्ती विषमे पथि । क्षुत्तृट्तापातुरा बाढं तापसीभिर्विलोकिता ॥ १७ ॥
आश्वास्य कुलपत्यग्रे नीता तेन निजाश्रमे । स्थापिता बहुमानेन कियन्त्यपि दिनानि सा ॥ १८ ॥
अथान्यदा कुलपती राज्ञीं तां वृद्धतापसैः । श्रीपुरं प्रापयद् गर्भभारालसलसत्क्रमा ॥ १९ ॥
तदुद्यानस्थिते चार्हद्गृहे सार्हन्तमानमत् । तदा तत्रागता काचित् श्राविका जिनसुन्दरी ॥ २० ॥
साधर्मिकि ! त्वां वन्देऽहमित्युल्लापपरायणा । ज्ञात्वा तच्चरितं साप्याश्वास्य निन्येऽथ तां गृहे ॥२१॥
धनञ्जयमहेभ्यस्य गृहे सा तस्थुषी सुखम् । नाज्ञासीत् पतिविश्लेषादिकं दुःखं तु किञ्चन ॥ २२ ॥
प्रावृट्कालोऽन्यदाऽऽयासीद् वियुक्तजनदुर्जनः । स्मृत्वा पतिं रुदन्तीं तां जिनसुन्दर्यबूबुधत् ॥ २३ ॥

प्रासूत तत्र पुत्रं सा पितृगेह इव स्थिता । धनञ्जयो जयोत्कर्षावहं जन्ममहं व्यधात् ॥ २४ ॥
कुसुमायुधनाम्नाऽसौ रूपेण कुसुमायुधः । क्रमात् त्रिवर्षदेशीयः सञ्जातस्तद्गृहे शिशुः ॥ २५ ॥
इतो वासवदत्ताख्यं सार्थवाहं ततः पुरात् । चंपापुरीं जिगमिषुं श्रेष्ठ्याचष्ट धनञ्जयः ॥ २६ ॥
भ्रातः ! पुत्रीमिमां तन्मे चंपां संपादय द्रुतम् । प्रतिपन्ने च तेनासौ चलिता स्वपुरीं प्रति ॥ २७ ॥
अथान्तरा समायाते नगरे शिववर्द्धने । सबालापि रसालाधः सा वाला यावदस्वपत् ॥ २८ ॥
इतस्तन्नगरस्वामी सुन्दरः सोदरान्वितः । विहाय हयहस्त्यादि प्राभवं प्राव्रजत् स्वयम् ॥ २९ ॥
ऋते राज्योचितं पुत्रं पञ्च दिव्यानि मन्त्रिभिः । अभिषिक्तानि तैं राज्येऽभिषिक्तः कुसुमायुधः ॥ ३० ॥
सार्थवाहस्तच्चरित्रं मन्त्रिणां पुरतोऽवदत् । नृपमातृष्वसुः पुत्रं तेऽप्यवेत्य प्रमोदतः ॥ ३१ ॥
महामहेन तं वालं महीपालं व्यरीरचन् । समन्तात् सर्वसामन्ताः प्रणेमुस्तं कृतादराः ॥ ३२ ॥
इतोऽवन्तीपुरस्वामी नृपती राजशेखरः । श्रुत्वाऽऽगात् तत्र त वालं भूपालं स्वबलान्वितः ॥ ३३ ॥
जिघृक्षुस्तस्य तद्राज्यं तत्पुरं पर्यवेष्टयत् । लुब्धात्मानो न यद्वर्णमवर्णं गणयन्त्यमी ॥ ३४ ॥
अथ वासवदत्ताख्यः साथवाहः कियद्दिनैः । गतश्चंपापुरीं तत्र जयनाम्नो महीपतेः ॥ ३५ ॥
प्रियमत्याश्च कुसुमायुधस्य नवभूभुजः । वृत्तान्तमाख्यदखिलं विस्मयात् तं नृपोऽशृणोत् ॥ ३६ ॥ (युग्मम्.)

ससैन्यो जयभूपोऽथ जगाम शिववर्द्धनम् । मिलितः. स प्रमोदेन तत्र पुत्रकलत्रयोः ॥ ३७ ॥
तत्रैव प्रियमत्याश्च जनको जनकोटिभिः । मानतुङ्गनृपोऽप्येतस्तद्वृत्तं ज्ञापितोऽखिलम् ॥ ३८ ॥
राजशेखरभूपोऽपि श्रुत्वा व्यतिकरं च तम् । विलक्षः क्षामणाहेतोर्जयराजमुपस्थितः ॥ ३९ ॥
अज्ञातवृत्तेन मया त्वत्सुतोपरि यत्कृतः । मुधा समरसंरंभस्तन्मृषामर्षवर्जितः ॥ ४० ॥
एवं सर्वेऽपि संभूय मैत्रीभावं मिथोऽश्रयन् । चक्रुः शक्रसमा भूत्या भपास्तत्र महामहम् ॥ ४१ ॥
बहूनां भूपतीनां यत् तत्राभूत् सङ्गमः पुरे । तेन तन्नगरं ख्यातं राजसङ्गमनामतः ॥ ४२ ॥
राजशेखरभूपोऽथ कन्या द्वात्रिंशतं निजाः । कुसुमायुधभूपाय प्रददौ मुददौस्थ्यतः ॥ ४३ ॥
अन्यदा समवासार्षीत् तत्पुरोद्यानसीमनि । बहुशिष्यपरीवारो गुणसागरकेवली ॥ ४४ ॥
जयादयो नृपाः सर्वे तं वन्दितुमथागमन् । शुश्रुवुः प्रयतास्तस्य देशनां क्लेशनाशिनीम् ॥ ४५ ॥
प्रबुद्धा बुद्धिमन्तोऽमी सर्वेऽपि वसुधाधवाः । दत्त्वा राज्यानि कुसुमायुधाय परिवव्रजुः ॥ ४६ ॥
कुसुमायुधभूजानिर्भुव एकातपत्रताम् । कुर्वाणोऽर्हच्छासनस्य परामुन्नतिमानयत् ॥ ४७ ॥
अथ तस्यावनीभर्त्तू राजशेखरराट्सुता । स्फुरद्गुणावली पट्टराज्यभूत् कुसुमावली ॥ ४८ ॥
जयसुन्दरदेवोऽस्याः कुक्षौ सरसि हंसवत् । अवातरच्छिखिस्वप्नसूचितो निचितो गुणैः ॥ ४९ ॥

निःशेषलक्षणोपेततनुः स तनुभूरभूत् । पिता कुसुमकेत्वाख्यां प्रादात् तस्मै मुदान्वितः ॥ ५० ॥
वर्द्धमानः क्रमात् काममामनत् सकलाः कलाः । प्रस्फुरद्गुरुलावण्यं स तारुण्यं वयोऽश्रयत् ॥ ५१ ॥
नृपोऽथ मथुराधीशो महाकीर्त्तिर्महाद्युतिः । महामात्येन कुसुमायुधभूपं व्यजिज्ञपत् ॥ ५२ ॥
देवास्माकं सुता इष्टाः शिष्टा अष्टावनिष्ठुराः । परापराम्बाप्रभवा लसद्धीविभवाश्च ताः ॥ ५३ ॥
एता उदग्रवैदग्ध्यमुग्धाः स्निग्धा मिथोऽन्वहम् । न कोऽपि वशमानेतुं क्षमते भूपभूः परम् ॥ ५४ ॥
श्रुत्वा कुसुमकेतोश्चात्यद्भुतं गुणवैभवम् । तद्ध्यानार्थैकतानास्ताः स्तुवतेऽमुं मुहुर्मुहुः ॥ ५५ ॥
तत् सर्वथापि कुसुमकेतुं संप्रेष्य सत्वरम् । मनसो निर्वृतिस्तासां कर्त्तव्यैव किमुच्यते ॥ ५६ ॥
यावद् दत्ते भुवो भर्त्ता तस्मै प्रतिवचः प्रियम् । जयतुङ्गनृपस्तावत् तं दूतेन व्यजिज्ञपत् ॥ ५७ ॥
राजन्नाजन्मसंसिद्धस्फुरद्गुरुगुणव्रजाः । षोडशोदिततारुण्याः कन्या नः सन्ति संप्रति ॥ ५८ ॥
उक्तो नैमित्तिकेनासां द्विरष्टानामपीष्टदः । गुणैरनूनस्त्वत्सूनुर्वरो विपुलवैभवः ॥ ५९ ॥
तत्पाणिग्रहणायासां कन्यानां प्रहिणु प्रभो ! । सुतं कुसुमकेतुं स्वं परिवारयुतं जवात् ॥ ६० ॥
अत्रान्तरे च साकेतपतिमन्त्री नृपं जगौ । दिक्कन्या इव नः सन्ति सुता अष्टौ गुणैर्युताः ॥ ६१ ॥
तासां वरकृते तत् त्वां देव ! विज्ञापयाम्यहम् । सुतः कुसुमकेतुस्तद्विवाहाय प्रहीयताम् ॥ ६२ ॥

ऊचे नृपः कुमारोऽयमेकस्तत् कुत्र यात्त्रयम् । त्रयोऽप्यलङ्घ्या यदमी एकत्र प्रेष्यते यदि ॥ ६३ ॥
द्वयोर्हीला भवेत् तद्धि बुद्धिमान् मन्त्र्यथालपत् । कुमारस्तिष्ठतादत्रायास्यन्त्येताः स्वयंवराः ॥ ६४ ॥ (युग्मम्)
सर्वेषां प्रियमेवैतदिति भूपः प्रपेदिवान् । प्राप्ताः स्वयंवरास्तास्ता उपायंस्तावनीशसूः ॥ ६५ ॥
रममाणः समं ताभिर्दोगुन्तक इवामरः । विचक्षणः क्षणमिव कुमारोऽगमयत् समाः ॥ ६६ ॥
पुरन्दरादिश्रमणपञ्चशत्या समन्वितः । अत्रान्तरे समागच्छदुद्याने सुन्दरो मुनिः ॥ ६७ ॥
कुसुमायुधभूपस्तं नत्वा शुश्राव देशनाम् । प्रबुद्धः प्राह कुसुमकेतुं नाम्ना निजं सुतम् ॥ ६८ ॥
वत्स ! स्वच्छ, समादत्स्व राज्यभारं समाहितः । श्रीसुन्दरगुरूपान्ते येनाहं स्यां व्रतोद्यतः ॥ ६९ ॥
आख्यत् कुसुमकेतुस्त्वामन्तरेण पितः ! क्षणम् । न स्थातुमीशे तदहं त्वयादास्य सह व्रतम् ॥ ७० ॥
तन्निर्बन्धं ततोऽवेत्य सञ्जातव्रतनिश्चयम् । देवसेनकुमारं द्रागभिषिच्य निजे पदे ॥ ७१ ॥
कुसुमकेतुप्रमुखैर्नरपञ्चशतैः समम् । प्राव्राजीदस्तकुसुमायुधः स कुसुमायुधः ॥ ७२ ॥ (युग्मम्.)
अन्यदा गुरुवाक्येन प्रपन्नः कुसुमायुधः । सत्त्ववानेव एकाकिविहारप्रतिमां मुनिः ॥ ७३ ॥
ग्रामे क्वापि शून्यगेहे स कायोत्सर्गमग्रहीत् । प्रदीपनाग्निना दह्यमानोऽपि स्थिरमानसः ॥ ७४ ॥
न चचाल शुभध्यानान्मनागपि महामुनिः । समाधिमृत्युना मृत्वा सर्वार्थे त्रिदशोऽभवत् ॥ ७५ ॥

अथ श्रीसुन्दराचार्यः शुक्लध्यानाग्निना द्रुतम्। दग्ध्वा कर्मेन्धनं लब्ध्वा केवलं सिद्धिमाप्तवान् ॥ ७६ ॥
कृत्वा संलेखनां तीव्रां कुसुमात् केतुरप्ययम् । अनुत्तरे विमानेऽभूद् विबुधो जगदुत्तरे ॥ ७७ ॥
त्रयस्त्रिंशत्सागराणि तत्र स्थित्वा हि तौ सुखम् । अवतीय सकृत् सिद्धिं प्राप्स्येते चाचिरादपि ॥७८॥

इति पं० श्रीसत्यराजगणिविरचिते श्रीपृथ्वीचन्द्रमहाराजर्षिचरिते श्रीकुसुमायुधराजर्षि-
चरितं दशमं भवग्रहणम् ।

---

# एकादशो भवः ।

अथास्ति कोशले देशेऽयोध्या नाम महापुरी । हरिसिंहो नृपस्तत्र तस्य पद्मावती प्रिया ॥ १ ॥
इतः सर्वार्थतश्च्युत्वा कुसुमायुधनिर्जरः । विमानस्वप्नतः पद्मावतीकुक्षाववातरत् ॥ २ ॥
पूर्णे काले प्रशस्तेऽह्नि सुखं प्रासूत सा सुतम् । व्यधात् तस्याभिधां पृथ्वीचन्द्र इत्यवनीधवः ॥ ३ ॥
क्रमेणाभ्यस्तसद्विद्योऽनवद्यचरितोऽथ सः । अवापत् तरुणीनेत्रजीवनं यौवनं वयः ॥ ४ ॥
कन्याः षोडश भूपोऽथ कुमारं पर्यणाययत् । नृसिंहो हरिसिंहस्तं महामहपुरस्सरम् ॥ ५ ॥
ज्यायसी प्रेयसी तस्य मातुलस्य सुताऽभवत् । जयदेवस्य ललितसुन्दरीत्यभिधानतः ॥ ६ ॥
पृथ्वीचन्द्रः पुनर्भोगविमुखः स्त्रीषु नो रतिम् । मनागप्यभजच्चेति दध्यौ चेतसि सन्ततम् ॥ ७ ॥
अहो ! पितृभ्यामेषोऽस्मि रागाब्धौ पातितः कथम्। यदेता दयिता नैव मां विमुञ्चन्ति जातुचित् ॥८॥
कथञ्चित् तदुपायेन प्रेयसीः प्रतिबोध्य ताः । प्रतिपद्ये परिव्रज्यां कुर्यां स्वहितमञ्जसा ॥ ९ ॥
ततोऽमुं निर्मितामन्दधर्मकर्मेच्छमङ्गजम् । मत्वा मोहादश्रुमिश्रनयनो जनकोऽब्रवीत् ॥ १० ॥

वत्स ! स्वच्छमतेऽस्माकं तावद् वार्द्धकमागतम् । त्वं तु राज्यरमारामासमागमपराङ्मुखः ॥ ११ ॥
तद् विचार्य यदत्र स्यादुचितं कथयाशु तत् । त्वयि राज्यधरेऽद्यापि यद् वयं राज्यलोलुपाः ॥ १२ ॥
तदेतद्ह्रीकरं लोके न चायं नः कुलक्रमः । प्राव्रजन् पूर्वजा यन्नः सर्वे राज्यधरेऽङ्गजे ॥ १३ ॥
तत् स्वीकुरु त्वमात्मीयं राज्यं मा प्रार्थनां वृथा । कार्षीर्नः स इति श्रुत्वा तत् पित्रोक्तं तथाऽकरोत् ॥१४॥
ततो निवेशितो राज्ये पृथ्वीचन्द्रो महामहात् । मोदन्ते स्म जनाः सर्वे तद्राज्यं वीक्ष्य विस्मिताः ॥१५॥
अथ पृथ्वीमहेन्द्रेऽस्मिन् पृथ्वीचन्द्रे पृथुद्युतौ । पृथ्वीं शासत्यन्यदैत्य सुधनाऽऽख्यो वणिग्वरः ॥१६॥
प्राणमत् प्राभृतेनोर्वीपतिं विरचिताञ्जलिः । तं संमान्य नृपोऽपृच्छदाश्चर्यं ब्रूहि किञ्चन ॥ १७ ॥ (युग्मम्.)
सोऽप्याह कुरुदेशेऽस्मिन्नस्ति हस्तिपुरं पुरम् । पुरप्रधानस्तत्रासीन्महेभ्यो रत्नसञ्चयः ॥ १८ ॥
सुमङ्गला प्रिया तस्य तयोः पुत्रोऽभवद् वरः । तस्मिन् गर्भस्थिते माता स्वप्ने क्षीरार्णवं पपौ ॥ १९ ॥
गुणसागर इत्याख्या पृथिव्यां पप्रथेऽस्य तत् । क्रमेण वर्द्धमानोऽसौ प्रपेदे मध्यमं वयः ॥ २० ॥
परमाजन्म भोगेषु विरतो गुणसागरः । चक्रे रमासु रामासु न मनागपि मानसम् ॥ २१ ॥
अथ तत्र पुरेऽभूवन् महेभ्या अष्ट विश्रुताः । तेषां पुत्र्योऽभवन्नष्टौ तास्तारुण्यमगुः क्रमात् ॥ २२ ॥
अत्रापि ताः सुता वीक्ष्य कुमारं गुणसागरम् । बद्धानुरागास्तत्रोच्चैः प्रत्यज्ञासुश्च तं पतिम् ॥ २३ ॥

तासां तं निश्चयं ज्ञात्वा पितरस्ते कनीर्निजाः । गुणसागरसंज्ञाय महेभ्याङ्गभुवे ददुः ॥ २४ ॥
वातायनगतोऽन्येद्युर्ददर्श गुणसागरः । मूर्त्तं धर्ममिव प्राप्तशमं वाचंयमं जवात् ॥ २५ ॥
क्वाप्यपश्यमिदं रूपमित्यूहापोहसङ्गतः । प्राग् जन्म निजमस्मार्षीत् श्रामण्यं च पुराकृतम् ॥ २६ ॥
ततो विशिष्टसंवेगरङ्गसङ्गतमानसः । पितरौ स्माह न स्थातुं क्षमेऽहं भवचारके ॥ २७ ॥
तत् प्रसद्य व्रतादानानुमतिं मे प्रयच्छतम् । प्राहतुस्तौ वत्स ! किं ते सांप्रतं यौवने व्रतम् ॥ २८ ॥
अथ चेद् वत्स निर्बन्धो व्रते ते न निवर्त्तते । तदोद्वाह्य प्रियाः पश्चात् कुर्यास्तूर्णं स्वमीप्सितम् ॥ २९ ॥
प्रतिपद्य वचः पित्रोः कुमारो गुणसागरः । महामहेन ता अष्टावपि कन्या व्यवाहयत् ॥ ३० ॥
पाणीन् गृहीत्वा कन्यानामसौ मातृगृहे स्थितः । प्रावर्त्तत पुरस्तत्र नाटकं चित्रकृत् तदा ॥ ३१ ॥
गुणसागरस्तु नासास्तिमिताक्षः संयतेन्द्रियग्रामः । दध्यावेकाग्रमना मुनिर्भविष्याम्यहं प्रातः ॥ ३२ ॥
एवं तपः करिष्ये तथा विधास्यामि गुरुजने विनयम् । व्रतयोगेषु यतिष्ये स्थास्यामि ध्याननियमेषु ॥ ३३ ॥
एवं निभृतं ध्यायन् स्मरन् श्रुतं पूर्वजन्मनाभ्यस्तम् । प्रतिपद्य भावसंयममभङ्गसंवेगरससिक्तः ॥ ३४ ॥
उदितोदितविशदतराध्यवसायवशोऽनुसमयमेष मुनिः । निर्दग्धघातिकर्मा केवलममलं क्षणादापत् ॥ ३५ ॥
प्रणयिन्योऽपि नवास्ता अस्ताखिलकर्मघर्मसन्तापाः । प्रतिपन्नभावचरणा इह केवलसंविदमविन्दन् ॥ ३६ ॥

तत्केवलमहिमानं कर्त्तुमथाजग्मुरनिमिषाधीशाः । नेदुर्दिवि दुन्दुभयो भेजुर्भव्या मुदममन्दाम् ॥ ३७ ॥
तद्वीक्ष्य रत्नसञ्चयसुमङ्गले अपि तथा सुतवधूनाम् । केवलविभवं ते अपि मुहुर्मुहुस्तदनुमोदनया ॥ ३८ ॥
सञ्जातकर्मलाघववशेन सुविशुद्धसंयमरसेन । प्रक्षालितकर्ममले लेभाते केवलमनन्तम् ॥ ३९ ॥ (युग्मम्)
इत्येतत् तव नृपते ! विज्ञप्तं सांप्रतं महाश्चर्यम् । भूवल्लभोऽपि तदिदं निशम्य सम्यग् विभावयति ॥ ४० ॥
गुणसागरः स सत्यं गुणसागर एव येन निजकार्यम् । संसाधितं क्षणेन क्षयेण दुष्कर्मजालस्य ॥ ४१ ॥
जानन्नप्येष कथं पतितो राज्याख्यकूटयन्त्रेऽस्मिन् । गुरुजनदाक्षिण्यवशादुदास्तिमानात्मकार्येऽपि ॥ ४२ ॥
तदहं कदा प्रपत्स्ये भवमथनीं भगवतीं महादीक्षाम् । समशत्रुमित्रवृत्तिः कदा चरिष्याम्यनिर्बन्धः ॥ ४३ ॥
इति भावनावशात्मा क्षिप्त्वा क्षणतोऽप्यशेषकर्माणि । पृथ्वीचन्द्रमहीन्द्रः प्रपेदिवान् केवलज्ञानम् ॥ ४४ ॥
श्रुत्वैतत् तच्चरितं षोडश वीपतेः प्रिया अपि ताः । संवेगरङ्गसङ्गतमनसोऽवापुः परं ज्ञानम् ॥ ४५ ॥
हरिसिंहोऽपि महीभृत् पद्मावत्या समन्वितोऽपि तदा । केवलिवचसा कृतकर्मनिर्जयः केवलमवापत् ॥४६॥
अथ सुधनसार्थवाहो व्यजिज्ञपत् त तदा महर्षीन्द्रम् । पृथ्वीचन्द्रं भगवंस्तव गुणसागरमहर्षेश्च ॥ ४७ ॥
सोदरयोरिव साम्यं साम्यनिधे ! दृश्यते कथमिहेदृक् ?। केवल्यजलपदभवं कुसुमायुध इत्यहं पूर्वम् ॥ ४८ ॥ (युग्मम्.)
आसीद् गुणमणिसिन्धुर्बन्धुर्मे कुसुमकेतुरिति नाम्ना । स च गुणसागर इत्ययमभूद् यथार्थाभिधस्तत्र ॥४९॥

तदखिलमिहेति हेतोर्मम तस्य च दृश्यमस्ति सादृश्यम् । श्रुत्वेति साधुमधुनोऽप्यधुनोत् सुधनो वचः स्वशिरः ॥९०॥
संप्राप्तपरमबोधः सोऽधःकृतदुष्कृतोऽथ गृहिधर्मम् । प्रतिपद्य हृद्यमभवदत्रामुत्रापि शर्मपदम् ॥ ९१ ॥
अनेकलक्षाण्यब्दानां कैवल्यं प्रतिपाल्य ते । पृथ्वीचन्द्रादयः सर्वे शिवश्रियमशिश्रयन् ॥ ९२ ॥

इति पं० श्रीसत्यराजगणिविरचिते श्रीपृथ्वीचन्द्रमहाराजर्षिचरिते गुणसागर-पृथ्वीचन्द्र-केवलोत्पत्तिवर्णनमेकादशं भवग्रहणम् ।

श्रीपृथ्वीचन्द्रचरितं समाप्तम् ।

# अथ ग्रन्थकर्त्तुः प्रशस्तिः ।

पृथ्वीचन्द्रमहीमहेन्द्रयतिनश्चैतच्चरित्रं सतां श्रोतॄणामघनाशनं प्रशमितप्रत्यूहपूरं सदा ।
ये शृण्वन्ति समाहितात्ममनसः प्रक्षीणसर्वांहसस्ते श्रेयः परमां श्रयेयुरचिरान्निःश्रेयसस्य श्रियम् ॥ १ ॥
कुन्देन्दूज्ज्वलकीर्त्तिमञ्जुलतरे राकागणे श्रीमति श्रीमन्तः शुचिशेमुषीविशदतावाचस्पतिप्रत्ययाः ।
नानाग्रन्थनिबन्धबन्धुरगिरो भास्वद्गुणालीभृतो राजन्ते स्म गुणात् समुद्रगुरवस्तेजःश्रिया भासुराः ॥ २ ॥
तत्पट्टोदयभूमिभृद्वरशिरःश्रृङ्गारभास्वत्प्रभाः श्रीसूरीश्वरपुण्यरत्नगुरवः पुण्यश्रिया पेशलाः ।
तच्छिष्यो लिखति स्म विस्मयकरं श्रीसत्यादिराजाह्वयोऽम्भोध्यग्नीषुविधून्मिते शरदि तद्वाच्यं चरित्रं बुधैः ॥ ३ ॥
प्राकृतबन्धेनैतच्चरितं रचितं हि पूर्वकविवर्यैः । मुग्धाववोधकृतये व्यधामिहानुष्टुबादिविधिम् ॥ ४ ॥
विधाय गुम्फमेतस्य चरित्रस्य यदर्जितम् । सुकृतं तेन भूयाद् मे बोधिलाभो भवे भवे ॥ ५ ॥
यल्लक्षणालङ्कारादिहीनमेतद् भवेत् क्वचित् । परं प्रसादमाधाय सुधीभिः शोध्यमेव तत् ॥ ६ ॥
नादूष्यवैदुष्यविभासनाय कवित्ववैदग्ध्यनिरूपणाय ।
व्यधां कथामात्रनिवेदनाय चरित्रमेतत् परमल्पबुद्धिः ॥ ७ ॥

तिलेषु कृष्णानि तुषे तृणानि यथैव सङ्ख्यातुमलं न कोऽपि ।
तथा मदुक्तिष्वपि दूषणालीं सा चिन्तनीया न परं सुधीभिः ॥ ८ ॥
किं वाऽथ तत्प्रार्थनयानया मे सन्तो गुणेष्वेव कृतादरा यतः ।
मुदा सदा मोदयते मनोरमे सुमे रमेरन्ननु षट्पदालयः ॥ ९ ॥
षट्चत्वारिंशदग्र्याण्यष्टादशैव शतानि च ।
सर्वाग्रं श्लोकमानेन प्रमाणमिह निश्चितम् ॥ १० ॥

इति ग्रन्थकर्त्तुः प्रशस्तिः ।

---

सं० १५३५ वर्षे माघे सितदशम्यां गुरौ अद्येह श्रीअहम्मदावादनगरे श्रीपूर्णिमापक्षविभूषण–श्रीगुणसागरसूरिपट्टालङ्कार–श्रीपूज्यश्रीगुणसमुद्रसूरयस्तत्पट्टोदयगिरिमिहिरकरणयः श्रीपुण्यरत्नसूरिवराः संप्रति विजयन्ते । तेषां विनेयवर्येण सत्यराजगणिना लिखितमिदम् ।

चिरं चतुरकोटीरैर्वाच्यमानं जयत्विदम् ।
सच्चरित्रं विमुग्धानामवबोधविधायकम् ॥ १ ॥